झिपर इत्यपरे। वग्धि। वच्यात्। उच्यात्। अवोचत्।
**१०६४ विद ज्ञाने॥**

**२४६४। विदो लटो वा** ।३।४।८३। वेत्तेर्लटः परस्मैपदानां णलादयो वा स्युः। वेद। विदतुः। विदुः। वेत्थ। विदथुः। विद। वेद। विद्व। विद्म। पक्षे वेत्ति। वित्तः। इत्यादि। विवेद। विविदतुः। 'उषविद-२३४१' इत्याम्पक्षे विदेत्यकारान्तनिपातनान्न लघूपधगुणः। विदांचकार। वेदिता॥

**२४६५। विदांकुर्वन्त्वित्यन्यतरस्याम्** ।३।१।४१। वेत्तेर्लोट्याम् गुणाभावो लोटो लुक् लोडन्तकरोत्यनुप्रयोगश्च वा निपात्यते। पुरुषवचने[1] न विवक्षिते इतिशब्दात्॥

**२४६६। तनादिकृञ्भ्य उः** ।३।१।७९। तनादेः कृञश्च उप्रत्ययः स्यात्। शपोऽपवादः। तनादित्वादेव सिद्धे कृञ्ग्रहणं गणकार्यस्यानित्यत्वे लिङ्गम्। तेन न विश्वसेदविश्वस्तमित्यादि सिद्धम्। विदांकरोतु॥

**२४६७। अत उत्सार्वधातुके** ।६।४।११०। उप्रत्ययान्तस्य कृञोऽकारस्य उत्स्यात्सार्वधातुके[2] क्ङिति। उदिति तपरकरणसामर्थ्यान्न गुणः। विदांकुरुतात्। विदांकुरुताम्। 'उतश्च-२३३४' इति हेर्लुक्। आभीयत्वेन लुकोऽसिद्धत्वादुत्वम्। विदांकुरु। विदांकरवाणि। अवेत्। अवित्ताम्। 'सिजभ्यस्त-२२२६' इति झेर्जुस्। अविदुः॥

**२४६८। दश्च** ।८।२।७५। धातोर्दस्य पदान्तस्य सिपि परे रुः स्याद्वा। अवेः। अवेत्। **१०६५ अस् भुवि।** अस्ति॥

**२४६९। श्नसोरल्लोपः** ।६।४।१११। श्नस्यास्तेश्चाकारस्य लोपः स्यात्सार्वधातुके क्ङिति। स्तः। सन्ति। 'तासस्त्योः-२१९१' इति सलोपः। असि। स्थः। स्थ। अस्मि। स्वः। स्मः॥ 'आर्धधातुके २४३२' इत्यधिकृत्य॥

**२४७०। अस्तेर्भूः** ।२।४।५२। बभूव। भविता। अस्तु। स्तात्। स्ताम्। सन्तु॥

**२४७१। घ्वसोरेद्धावभ्यासलोपश्च** ।६।४।११९। घोरस्तेश्च एत्वं स्याद्धौ परे अभ्यासलोपश्च। आभीयत्वेन एत्वस्यासिद्धत्वाद्धेर्धिः। 'श्नसोः-२४६९' इत्यल्लोपः। एधि। तातङ्पक्षे एत्वं न, परेण तातङा बाधात्, (प) सकृद्गताविति न्यायात्। स्तात्। स्तम्। स्त। असानि। असाव। असाम। 'अस्तिसिच-२२२५' इतीट्। आसीत्। 'श्नसोः-२४६९' इत्यल्लोपस्याभीयत्वेनासिद्धत्वादाट्। आस्ताम्। आसन्। स्यात्। भूयात्। अभूत्। सिचोऽस्तेश्च विद्यमानत्वेन विशेषणादीण्न॥

---

अस्मिन् पक्षे लटि मध्यमे। वक्थः। उत्तमे तु। वच्मः। लिटि। ऊचुः। मध्यमे। ऊच। उत्तमे तु। ऊचिम। लुटि वक्तारः। लिङि वच्यासुः। उच्यासुरित्यादयोऽप्यसाधवः॥—**झिपर इति**। अस्मिंस्तु पक्षे। वक्थः। वच्मः। ऊचे। लिटि ऊच ऊचिमेत्यादयः साधव इति दिक्॥—**विदो लटो वा**। पञ्चमीयं न तु षष्ठी। तेन वियतिविन्दत्योरव्यवहितपरस्य लटोऽभावान्नैते आदेशास्तदाह—**वेत्तेरिति**॥—**लोटो लुगिति**। 'आमः' इति सूत्रे 'मन्त्रे घस-' इत्यतो लेरित्यनुवर्त्य आमः परस्य लेर्लुगिति व्याकुर्वतां मतेनेदमुक्तम्। निष्कर्षे तु तेनैव लुगिति बोध्यम्॥—**पुरुषवचने इति**। प्रथमपुरुषो बहुवचनं चेत्यर्थः। परस्मैपदमप्यविवक्षितमेवेति केषांचिन्मते कर्मव्यतिहारे तङि। व्यतिविदांकुरुताम्। व्यतिविदांकुर्वातामित्यादि ज्ञेयम्॥—**तेनेति**। विश्वसेदित्यत्र शपो लुगभावः सिद्ध इति भावः। एवमप्यविश्वस्तमित्यत्रेडभावः कथमिति चेदागमशास्त्रस्यानित्यत्वादिति गृहाण॥—**अत उत्सार्व**—। क्ङिति किम्। करोति। करोषि॥—**लुकोऽसिद्धत्वादिति**। सार्वधातुकग्रहणमुत्तरार्थमेव नात्रावश्यकम्। इह भूतपूर्वगत्या सार्वधातुकपरत्वमाश्रीयत इति वृत्तिमते त्वसिद्धवर्णनस्योपयोगलेशोऽपि नास्तीति ज्ञेयम्॥—**दश्च**। 'सिपि धातोरुर्वा' इत्यनुवर्तते, पदस्येति, 'झलां जशोऽन्ते' इत्यस्मादन्त इति च तदाह—**धातोर्दस्येत्यादि**। सिपि किम्। तिपि। अवेत्। दान्तस्य धातोः सिपि रुर्वेत्येतावतैवेष्टसिद्धौ पदान्तानुवृत्तिर्मन्दप्रयोजनेत्याहुः। तच्चिन्त्यम्। वेत्सीत्यत्रातिप्रसङ्गाच्चत्वस्यासिद्धत्वेन दान्तत्वात्॥—**श्नसोरल्लोपः**। 'अत उत्-' इति सूत्रादत इत्यनुवर्त्याद्ग्रहणं त्यक्तुं शक्यमित्याहुः॥—**श्नसोरिति**। शकन्ध्वादित्वात्पररूपमित्याह—**श्नस्यास्तेश्चेति**। श्नस्योदाहरणम्। रुन्धः। रुन्धन्तीत्यादि। क्ङिति किम्। रुणद्धि। अस्ति। तपरकरणमास्तामासन्नित्यत्र ह्याडागमे कृते तस्य लोपो माभूदित्येतदर्थम्। निष्कर्षस्तु अनुपदं स्फुटीभविष्यति॥—**घ्वसोरेद्धा**—। एत्वमलोऽन्त्यस्य लोपस्तु शित्त्वात्सर्वस्येति भाष्यादौ स्पष्टम्। देहि। धेहि॥—**असिद्धत्वादाडिति**। नन्वेवमाटोऽसिद्धत्वात् 'श्नसोः-' इत्यल्लोपो न भवेदिति तपरकरणं तत्र व्यर्थमिति चेत्। अत्राहुः। आभाच्छास्त्रस्यानित्यताज्ञापनाय तपरकरणम्। तेन देभतुरित्यादि सिद्धमिति। स्यादेतत्। अत्र केचित्। अद्ग्रहणस्य निष्फलत्वे तपरकरणस्य ज्ञापनार्थत्वं न सिध्येत्। न च 'अत उत्-' इति सूत्रस्थतपरकरणमेव ज्ञापनार्थमस्त्विति वाच्यम्। अस्येत्युक्तौ

---

१ **न विवक्षिते इति**—तयोर्नान्तरीयकतया उच्चार्यमाणत्वादिति भावः। २ **सार्वधातुके क्ङितीति**—अत्र सार्वधातुके इति निष्फलम्। आर्धधातुके तस्य भूभावात्। ईहामासेत्यादौ 'अत आदेः' इति दीर्घे सति परस्य लोपेऽपि क्षत्यभावात्। श्नस्य सार्वधातुके एव सत्त्वाच्च।

**२४७२ । उपसर्गप्रादुर्भ्यामस्तिर्यच्परः** ।८।३।८७। उपसर्गेणः प्रादुसश्च परस्यास्तेः सस्य पः स्याद्यकारेऽचि च परे । निष्यात् । प्रादुःष्यात् । निषन्ति । प्रादुःषन्ति । यच्परः किम् । अभिस्तः । **१०६६ मृजू शुद्धौ** ॥

**२४७३ । मृजेर्वृद्धिः** ।७।२।११४। मृजेरिको वृद्धिः स्याद्धातुप्रत्यये परे ॥ ॐ **क्लित्यजादौ वेष्यते** ॥ 'व्रश्च–२९४' इति षः । मार्ष्टि । मृष्टः । मृजन्ति । मार्जन्ति । ममार्ज । ममार्जतुः । ममृजतुः । ममार्जिथ । ममार्ष्ठ । मार्जिता । मार्ष्टा । मृड्ढि । अमार्ट् । अमार्जम् । अमार्जीत् । अमार्क्षीत् । **१०६७ रुदिर् अश्रुविमोचने** ॥

**२४७४ । रुदादिभ्यः सार्वधातुके** ।७।२।७६। रुद् स्वप् श्वस् अन् जक्ष एभ्यो वलादेः सार्वधातुकस्येट् स्यात् । रोदिति । रुदितः । हौ परत्वादिटि धित्वं न । रुदिहि ॥

**२४७५ । रुदश्च पञ्चभ्यः** ।७।३।९८। हलादेः पितः सार्वधातुकस्यापृक्तस्य ईट् स्यात् ॥

**२४७६ । अड्गार्ग्यगालवयोः** ।७।३।९९। अरोदीत् । अरोदत् । अरुदिताम् । अरुदन् । अरोदीः । अरोदः । प्रकृतिप्रत्ययविशेषापेक्षाभ्यामडीड्भ्यामन्तरङ्गत्वाद्यासुट् । रुद्यात् । अरुदत् । अरोदीत् । **१०६८ ञिष्वप् शये** । स्वपिति । स्वपितः । सुष्वाप । सुषुपतुः । सुषुपुः । सुष्वपिथ । सुष्वप्थ ॥

**२४७७ । सुविनिर्दुर्भ्यः सुपिसूतिसमाः** ।८।३।८८। एभ्यः सुप्यादेः सस्य पः स्यात् । पूर्वं धातुरुपसर्गेण युज्यते । किति लिटि परत्वात्संप्रसारणे पत्वे च कृते द्वित्वम् । (प) **पूर्वत्रासिद्धीयमद्विर्वचने** । सुषुषुपतुः । सुषुषुपुः । अकिति तु द्वित्वेऽभ्यासस्य संप्रसारणम् । षत्वस्यासिद्धत्वात्ततः पूर्वं 'हलादिः शेषः २१७९' । नित्यत्वाच्च । ततः सुपिरूपाभावान्न पः । सुसुष्वाप । सुस्वप्ता । अस्वपीत् । अस्वपत् । स्वप्यात् । सुप्यात् । सुषुप्यात् । अस्वाप्सीत् । **१०६९ श्वस प्राणने** । श्वसिति । श्वसिता । अश्वसीत् । अश्वसत् । श्वस्याताम् । श्वस्यास्ताम् । 'ह्यन्तक्षण—२२९९' इति न वृद्धिः । अश्वसीत् । **१०७० अन च** । अनिति । आन । अनिता । आनीत् । आनत् ॥

**२४७८ । अनितेः** ।८।४।१९। उपसर्गस्थान्निमित्तात्परस्यानितेर्नस्य णः स्यात् । प्राणिति । **१०७१ जक्ष भक्षहसनयोः** । जक्षिति । जक्षितः ।

**२४७९ । अदभ्यस्तात्** ।७।१।४। झस्य अत्स्यात् । अन्तापवादः । जक्षति । 'सिजभ्यस्त–२२२६' इति जुस् । अजक्षुः । अयमन्तस्थादिरित्युज्ज्वलदत्तो बभ्राम । रुदादयः पञ्च गताः ॥

**१०७२ जागृ निद्राक्षये** । जागर्ति । जागृतः । जाग्रति । 'उपविद्–२३४१' इत्याम्वा । जागरांचकार । जजागार ॥

**२४८० । जाग्रोऽविचिण्णल्ङित्सु** ।७।३।८५। जागर्तेर्गुणः स्याद्विचिण्णल्ङिद्भ्योऽन्यस्मिन् वृद्धिविषये

---

गौरवादर्धमात्रालाघवाय तत्र तपरत्वमिति सुवचत्वात् । तस्मादुक्तज्ञापनार्थमद्ग्रहणमावश्यकमित्याहुः ॥—**उपसर्गप्रादुर्भ्याम्**—। प्रादुस् इति सान्तमव्ययम् । प्रादुषश्चेति पाठे प्रादुर्भ्यामिति निर्देशो न युज्यते इति प्राचां षान्तपाठः प्रामादिकः ॥—**परस्येति** । अयमस्तेः सस्य विशेषणं न त्वस्तेः । तेन प्रादुरस्तीत्यत्र न षत्वम् । उपसर्गेत्यादि किम् । दधि स्यात् । अस्तेः किम् । परिस्रजति । **मृजू शुद्धौ** । अयं न षित् । भिदादिपाठसामर्थ्यात् ॥—**मृजेर्वृद्धिः** । गुणापवादः । धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानमित्याह—**धातुप्रत्यये इति** । धातुप्रत्यये किम् । कंसपरिमृड्भ्याम् ॥—**क्लित्यजादाविति** । एतचान्येषां वैयाकरणानां मतं 'इको गुणवृद्धी' इति सूत्रे भाष्यकृता स्वीकृतम् ॥—**मृड्ढीति** । 'हुझल्भ्यः–' इति हेर्धिः । षत्वष्टुत्वजश्त्वानि ॥—**वलादेः सार्वधातुकस्येति** । वलादेः किम् । रुदन्ति । सार्वधातुके किम् । स्वप्ता ॥—**धित्वं नेति** । सकृद्गताविति न्यायात्, हेर्धिरिति स्थान्यादेशयोरिकार उच्चारणार्थ इत्यादिप्रागुक्तसमाधानाद्वेति भावः ॥—**रुदश्च**—। पञ्चभ्यः किम् । जागर्तेर्लङि अजागः ॥—**प्रकृतिप्रत्ययेत्यादि** । हलादिपित्सार्वधातुकापृक्तापेक्षत्वाच्च बहिरङ्गत्वमडीटोः ॥—**अरुददिति** । 'इरितो वा' इत्यङ् ॥—**अरोदीदिति** । 'अस्तिसिच–' इति ईट् । 'रुदश्च–' इत्यनेन तु न, सिचा व्यवधानेन रुदादेः परत्वाभावात् ॥—**सुषुपतुरिति** । 'वचिस्वपि–' इति संप्रसारणम् । ततो द्वित्वम् ॥—**सुपिसूतिसमा इति** । सूतीति क्तिन्नन्तः । समेति पचाद्यजन्तः । सुषुप्तिः । सुषूतिः । सुषमा । विषमः ॥—**अद्विर्वचन इति** । तेन षत्वसहितस्य द्वित्वम् ॥—**सुपिरूपाभावादिति** । 'एकदेशविकृतमनन्यवत्' इति तु न प्रवर्तते । तस्य स्थानिवत्सूत्रशेषत्वात् । षत्वस्य त्रैपादिकत्वेन तत्कार्यं प्रति स्थानिवत्त्वाभावादित्याहुः । वस्तुतस्तु 'स्थानिवदादेश–' इत्येनं प्रति त्रिपादी सिद्धेत्युक्तम् । तस्मादिह समाधानान्तरमूह्यमित्यन्ये ॥—**अनितेः** । 'उपसर्गादसमासेऽपि–' इत्यत उपसर्गादिति वर्तते, 'रषाभ्याम्–' इत्यतो 'नो णः' इति च तदाह—**उपसर्गस्थादित्यादि** ॥—**अन्तापवाद इति** । 'झोऽन्तः' इत्यस्य अदादेशोऽपवादः अस्य त्वपवादो जुसिति ज्ञेयम् ॥—**बभ्रामेति** । 'जक्षन् क्रीडन् रममाण' इत्युपनिषदि जशादित्वस्य निर्विवादत्वात् । 'नाभ्यस्ताच्छतुः' इति निषेधेन जक्षन् इति नुमश्छान्दसत्वेऽपि जशादित्वस्य तत्कल्पनाया अन्याय्यत्वात् । धातुवृत्त्यादौ जशादिपाठाच्च ॥—**जाग्रोऽविचिण्णल्**—॥ **ङिद्भ्योऽन्यस्मिन्निति** । जागृविः । विशब्देन वादिप्रत्ययो

प्रतिषेधविषये च। जजागरतुः। अजागः। अजागृताम्। अभ्यस्तत्वाज्जुस् ॥

२४८१। जुसि च ।७।३।८३। अजादौ जुसीगन्ताङ्गस्य गुणः स्यात्। अजागरुः। अजादौ किम्। जागृयुः। आशिषि तु जागर्यात्। जागर्यास्ताम्। जागर्यासुः। लुङि। अजागरीत्। जागृ इस् इत्यत्र यण् प्राप्तः। तं सार्वधातुकगुणो बाधते। तं सिचि वृद्धिः। तां जागर्तिगुणः। तत्र कृते हलन्तलक्षणा प्राप्ता, 'नेटि २२६८' इति निषिद्धा। ततः 'अतो हलादेः-२२८४' इति बाधित्वा 'अतो ल्रान्तस्य २३३०' इति प्राप्ता, 'ह्यन्त-२२९९' इति निषिध्यते ॥ तदाहुः—गुणो वृद्धिर्गुणो वृद्धिः प्रतिषेधो विकल्पनम्। पुनर्वृद्धिर्निषेधोऽतो यण्पूर्वाः प्राप्तयो नवेति। १०७३ दरिद्रा दुर्गतौ। दरिद्राति ॥

२४८२। इद्दरिद्रस्य ।६।४।११४। दरिद्रातेरिकारः स्याद्धलादौ क्ङिति सार्वधातुके। दरिद्रितः ॥

२४८३। श्नाभ्यस्तयोरातः ।६।४।११२। अनयोरातो लोपः स्यात् क्ङिति सार्वधातुके। दरिद्रति। अनेकाच्त्वादाम्। दरिद्रांचकार। 'आत औ णलः २३७१' इत्यत्र ओईत्येव सिद्धे औकारविधानं दरिद्रातेरालोपे कृते श्रवणार्थम्। अतएव ज्ञापकादाम्नेत्येके। ददरिद्रौ। ददरिद्रतुरित्यादि। यत्तु णलि ददरिद्रेति तन्निर्मूलमेव। ॐ दरिद्रातेरार्धधातुके विवक्षिते आलोपो वाच्यः ॥ ॐ लुङि वा ॥ ॐ सनि ण्वुलि ल्युटि च न ॥ दरिद्रिता। अदरिद्रात्। अदरिद्रिताम्। अदरिद्रुः। दरिद्रियात्। दरिद्र्यात्। अदरिद्रीत्। इट्सकौ। अदरिद्रासीत्। १०७४ चकासृ दीप्तौ। चकास्ति। झस्य अत्। चकासति। चकासांचकार। 'धि च २२४९' इति सलोपः सिच एवेत्येके। चकाद्धि। चकाधीत्येव भाष्यम् ॥

२४८४। तिप्यनस्तेः ।८।२।७३। पदान्तस्य सस्य दः स्यात्तिपि न त्वस्तेः। अचकात्। अचकाद्। अचकासुः ॥

२४८५। सिपि धातो रुर्वा ।८।२।७४। पदान्तस्य धातोः सस्य रुः स्याद्वा। पक्षे जश्त्वेन दः। अचकाः। अचकात्। १०७५ शासु अनुशिष्टौ। शास्ति ॥

२४८६। शास इदङ्हलोः ।६।४।३४। शास उपधाया इत्स्यादङि हलादौ क्ङिति च। 'शासिवसि-२४१०'

---

गृह्यते। इकारस्तूच्चारणार्थ इति वदतां मते क्सावपि न भवति। जजागृवान्। जजागृवांसौ। चिण्। अजागारि। णल्। जजागार। ङित्। जागृतः। जागृथः ॥—**वृद्धिविषये इति**। ण्वुलि। जागरकः। घञि। जागरः। णिचि। जागरयति। न चैतेषु गुणे कृतेऽपि 'अत उपधायाः' इति वृद्धिः स्यादिति वाच्यम्। गुणविधेश्चिण्णल्प्रतिषेधस्य चानर्थक्यापत्तेः ॥—**जुसि च**। चकारः स्पष्टप्रतिपत्त्यर्थः। 'क्सस्याचि' इत्यतोऽचीत्यनुवर्तत इत्याह—**अजादाविति** ॥—**जागृयुरिति**। एवं शृणुयुः चिनुयुरित्यादावपि गुणो नेति बोध्यम्। यासुटो ङित्त्वाच्छृणुयुरित्यादौ गुणो नेति प्राचोक्तिस्तु मनोरमायां दूषिता, 'जुसि च' इति गुणस्य निषेधापवादत्वादिति। केचित्तु 'जुसि च' इत्यत्र उसीत्यावर्त्य उसरूपे जुसीति व्याख्यानान्नोक्तदोष इत्याहुः। अजादौ जुसीति समाधानं तु भाष्यारूढम् ॥ जागर्तेः सिच इटि कृते यणादिप्राप्तिक्रमं दर्शयति—**जागृ इस् इत्यत्रेति** ॥—**तत्र कृते इति**। हलन्तलक्षणाया वृद्धेर्जागर्तिगुणेन बाधस्तेन गुणेन हलन्तत्वसंपादनात्। या हि गुणप्रवृत्तिसमये वृद्धिः सा बाध्यते नान्येति भावः। अजागरिष्टाम्। अजागरिषुः। अजागरीदित्यादि। **दरिद्रा** ॥—**इद्दरिद्रस्य**। इदरिद्र इति वक्तुमुचितम् ॥—**श्नाभ्यस्त**—। क्रीणन्ति। क्रीणते। पुनन्ति। पुनते। दधति। दधते। क्ङिति किम्। क्रीणाति। पुनाति। दधाति। अतः किम्। बिभ्रति ॥—**ओइत्येव सिद्धे इति**। प्रथमत्यागे मानाभावादिति भावः ॥—**निर्मूलमेवेति**। यत्तु व्याख्यातृभिः समर्थ्यते आमोऽभावे आतो लोपे कृते आदन्तत्वाभावादौत्वं नेति। तन्न। 'आत औ णलः' इत्यत्र प्राथम्यादोकारे कर्तव्ये औकारविधानं दरिद्रातेराल्लोपेऽपि श्रवणार्थं सत् आमभावे लिङ्गमिति हरदत्तमाधवादिग्रन्थैः स्वग्रन्थेन च विरोधात्। तत्कथमौत्वस्याप्रवृत्तिर्भवेत्। यदप्युक्तम्। ओकारौकारयोर्द्विमात्रत्वाविशेषादौकारविधानमिति। तदपि स्वधीयः। तस्मिन्पक्षे आमो दुर्वारत्वप्रसङ्गात् ॥—**विवक्षित इति**। तेन दरिद्रातीति दरिद्र इति पचाद्यजेव भवति परसप्तम्यां तु 'श्याद्व्यधा-' इत्यादन्तलक्षणो णः स्यात्। सति तु तस्मिन् 'आतो युक् चिण्कृतोः' इति युकि दरिद्राय इति स्यादिति भावः ॥—**सनि ण्वुलीति**। एतेष्वालोपो नेत्यर्थः। दिदरिद्रासति। दरिद्रायकः। दरिद्राणम् ॥—**अदरिद्रुरिति**। 'सिजभ्यस्त-' इति झेर्जुस्। 'लङः शाकटायनस्यैव' इत्यादन्तलक्षणो विकल्पस्तु न भवति। परत्वात् 'श्नाभ्यस्तयोः' इत्याल्लोपे आकारान्तस्यैवाभावात्। 'ईहल्यघोः' इत्यत ईत्वमिह न शङ्क्यमेव। झेर्जुसि हलादिपरत्वाभावादिति भावः। ननु दरिद्रा झि इति स्थिते जुसः प्रागेव आल्लोपातपरत्वादपवादत्वाच्च ईत्वं स्यात्। मैवम्। अकृतव्यूहपरिभाषाया जागरूकत्वात्। इत्वनिमित्तं हि हलादित्वं तच्च विनाशोन्मुखं जुसो भावित्वात् ॥—**झस्य अदिति**। 'अदभ्यस्तादित्यनेन ॥—**तिप्यनस्तेः**। पदान्तस्य किम्। चकास्ति। सस्येति किम्। वशेर्लङि तिपि अवट्। तिपि किम्। क्विपि चकाः। अनस्तेः किम्। सर्वमा इदम्। आ इति लङि तिपि अस्ते रूपम्। 'बहुलं छन्दसि' इति ईट् न ॥—**शास इदङ्हलोः**। अङि। अशिषत्। अशिषताम्

---

१ **ओ इत्येवेति**—द्विमात्रत्वसाम्येऽपि ओकारस्य विवृततरत्वेन प्रयत्नलाघवादिति भावः।

इति षः। शिष्टः। शासति। शशासतुः। शास्तु। शिष्टात्। शासतु॥

२४८७। शा हौ ।६।४।३५। शास्तेः शादेशः स्याद्धौ परे। तस्याभीयत्वेनासिद्धत्वाद्धेर्धिः। शाधि। अशात्। अशिष्टाम्। अशासुः। अशाः। अशात्। शिष्यात्। 'सर्तिशास्ति-२३८३' इत्यङ्। अशिषत्। अशासिष्यत्॥

१०७६। दीधीङ् दीप्तिदेवनयोः। एतदादयः पञ्च धातवश्छान्दसाः। दीधीते। 'एरनेकाचः-२७२' इति यण्। दीध्याते॥

२४८८। यीवर्णयोर्दीधीवेव्योः ।७।४।५३। एतयोरन्त्यस्य लोपः स्याद्यकारे इवर्णे च परे। इति लोपं बाधित्वा नित्यत्वादिटेरेत्वम्। दीध्ये। 'दीधीवेवीटाम् २१९०' इति गुणनिषेधः। दीध्यांचक्रे। दीधिता। दीधिष्यते। १०७७ वेवीङ् वेतिना तुल्ये। वीगतीत्यनेन तुल्येऽर्थे वर्तत इत्यर्थः॥

अथ त्रयः परस्मैपदिनः॥ १०७८ षस[1] १०७९ सस्ति स्वप्ने। सस्ति। सस्तः। ससन्ति। ससास। सेसतुः। सस्तु। सधि। 'पूर्वत्रासिद्धम् १२' इति सलोपस्यासिद्धत्वात् 'अतो हेः २२०२' इति लुक् न। असत्। असस्ताम्। असः। असत्। सस्यात्। असासीत्। अससीत्। सन्ति। इदित्वान्नुमि कृते संस्त इति स्थिते 'स्कोः-३८०' इति सलोपे 'झरो झरि सवर्णे ७१' इति तकारस्य वा लोपः। सन्तः। संस्तन्ति। बहूनां समवाये द्वयोः संयोगसंज्ञा नेत्याश्रित्य 'स्कोः-३८०' इति लोपाभावात्। संस्ति। संस्तः इत्येके। १०८० वश कान्तौ। कान्तिरिच्छा। वष्टि। उष्टः। उशन्ति। वक्षि। उष्ठः। उवाश। ऊशतुः। वशिता। वष्टु। उष्टात्। उड्ढि। अवट्। अवड्। औष्टाम्। औशन्। अवशम्। उश्यात्। उश्यास्ताम्। अवाशीत्। अवशीत्॥ (ग) चर्करीतं[2] च॥ यङ्लुगन्तमदादौ बोध्यम्। १०८२ ह्नुङ् अपनयने। ह्नुते। जुह्नुवे। ह्नुवीत। ह्नोपीष्ट। अह्नोष्ट। इत्यदादयः॥

---

## तिङन्ते जुहोत्यादयः ४३।

१०८३। हु दानादनयोः। आदाने चेत्येके। प्रीणनेऽपीति भाष्यम्। दानं चेह प्रक्षेपः। स च वैधे आधारे हविषश्चेति स्वभावाल्लभ्यते। इतश्चत्वारः परस्मैपदिनः॥

२४८९। जुहोत्यादिभ्यः श्लुः ।२।४।७५। शपः श्लुः स्यात्॥

२४९०। श्लौ ।६।१।१०। धातोर्द्वे स्तः। जुहोति। जुहुतः। 'अदभ्यस्तात् २४७९' इत्यत्। 'हुश्नुवोः-२३८७' इति यण्। जुह्वति॥

२४९१। भीह्रीभृहुवां श्लुवच्च ।३।१।३९। एभ्यो

---

क्डिति। शिष्टः। शिष्टवान्। शिष्यात्। शिष्यास्ताम्। अङ्साहचर्यात्परस्मैपद एवेत्वम्। नेह। आशास्ते। अन्ये तु यस्माच्छासेरङ् संभवति तस्यैवेत्वमिति व्याख्याय व्यतिशिष्टे व्यतिशिढ्वे इत्यात्मनेपदेऽपि इत्वं स्वीकुर्वन्ति॥—**शा हौ।** पूर्वसूत्रे उपधापदान्वयानुरोधेन शास इत्यवयवषष्ठ्यपि इह स्थानषष्ठ्येव उपधाया इत्यस्य निवृत्तत्वादित्याह—**शास्तेः शादेश इति।** 'धि च' इति सलोपेन शाधीति रूपे सिद्धेऽपि सलोपस्यासिद्धत्वात् 'शास इत्-' इति इत्वं स्यात् तद्वारणाय शाविधानमित्याहुः॥—**यीवर्णयोः।** य्वोरित्युक्तेऽपीष्टसिद्धौ यकारेकारयोरिति स्फुटप्रतिपत्तिर्न स्यादिति वर्णग्रहणं कृतम्। यिश्च इवर्णश्च यीवर्णौ तयोः। यिश्चेति इकार उच्चारणार्थो न तु विवक्षितस्तदाह—**यकारे इवर्णे चेति।** यिवर्णयोरिति पाठस्तूचितः॥—**लोपं बाधित्वेति।** लोपस्य तूदाहरणम्। आदीध्य गतः। आवेव्य गतः। दीधिता। दीधिष्यते। वेविता। वेविष्यते। यीवर्णयोरिति किम्। आदीध्यनम्। आवेव्यनम्। **षस॥—असदिति।** 'तिप्यनस्तेः' इति दत्वम्॥—**अस इति।** 'सिपि धातोः-' इति रुर्वा। पक्षे दः॥—**सन्तीति।** इदित्वान्नुमि सन्सत्ति इति स्थिते 'स्कोः' इति सलोपे 'झरो झरि सवर्णे' इति तकारस्य वा लोपः॥—**संस्ति संस्त इति।** इहापि पूर्ववत्तलोपो वा बोध्यः। **वश** कान्तौ। भाषायामप्यस्य प्रयोगो दृश्यते। 'वष्टि भागुरिरल्लोपं' 'जयाय सेनान्यमुशन्ति देवाः' इति॥—**चर्करीतं च।** गणसूत्रमिदम्। चर्करीतमिति यङ्लुगन्तस्य पूर्वाचार्याणां संज्ञा॥—**अदादौ बोध्यमिति।** तेन यङ्लुगन्तेषु 'अदिप्रभृतिभ्यः-' इति शपो लुग् भवतीति भावः। प्राचा तु चर्करीतमिति यङ्लुगन्तं परस्मैपदमित्युक्तं तच्चेहाप्रकृतत्वादुपेक्षितम्॥ इत्यदादयः॥

**हु दाना-**॥ यद्यपि स्वत्वनिवृत्तिपूर्वकं परस्वत्वापादनमेव दानं तथापि प्रयोगमनुसृत्य व्याचष्टे—**प्रक्षेप इति॥—वैध इति।** आहवनीयादौ॥—**हविष इति।** विधिबोधितद्रव्यस्येत्यर्थः॥—**स्वभावादिति।** तेन आहवनीये पुरोडाशे प्रक्षेप्तव्ये प्रमादेन कोपेन वा पाषाणः प्रक्षिप्तः पुरोडाशो वा गर्तादौ स तु प्रक्षेपो न होम इति ज्ञेयम्॥—**परस्मैपदेन इति।** तेन होष्य इति केषांचित्प्रयोगोऽसाधुरेव। 'सरामौ जुह्वानाः' इत्यानन्दलहरीप्रयोगस्तु साधुरेव।

---

१ षसस्तीति—'जक्षित्यादयः' इति सूत्रस्थभाष्यप्रयोगात्तु सस्तिधातुरत्र नास्तीति प्रतीयते। मूलपाठस्तु माधवानुरोधेनेति बोध्यम्। २ चर्करीतमिति—यङ्लुकः संज्ञेयमित्यर्थः।

लिट्याम्वा स्यादामि श्लाविव कार्यं च । जुहवांचकार । जुहाव । होता । होष्यति । जुहोतु । जुहुतात् । हेधि । जुहुधि । आटि परत्वाद्गुणः । जुहवानि । परत्वात् 'जुसि च २४८१' इति गुणः । अजुहवुः । जुहुयात् । हूयात् । अहौषीत् । १०८४ ञिभी भये । बिभेति ॥

२४९२ । भियोऽन्यतरस्याम् ।६।४।११५। इकारः स्याद्धलादौ क्ङिति सार्वधातुके । बिभितः । बिभीतः । बिभ्यति । बिभयांचकार । बिभाय । भेता । १०८५ ह्री लज्जायाम् । जिह्रेति । जिह्रीतः । जिह्रियति । जिह्रयांचकार । जिह्राय । १०८६ पॄ पालनपूरणयोः ॥

२४९३ । अर्तिपिपर्त्योश्च ।७।४।७७। अभ्यासस्य इकारोऽन्तादेशः स्यात् श्लौ ॥

२४९४ । उदोष्ठ्यपूर्वस्य ।७।१।१०२। अङ्गावयवौष्ठ्यपूर्वो य ऋत्तदन्तस्याङ्गस्य उत्स्यात् । गुणवृद्धी परत्वादिमं बाधेते । पिपर्ति । उत्वम् । रपरत्वम् । 'हलि च ३५४' इति दीर्घः । पिपूर्तः । पिपुरति । पपार । क्किति लिटि 'ऋच्छत्यृताम् २३८३' इति गुणे प्राप्ते ॥

२४९५ । शॄदॄप्रां ह्रस्वो वा ।७।४।१२। एषां क्किति लिटि ह्रस्वो वा स्यात् । पक्षे गुणः । पप्रतुः । पप्रुः । पपरतुः । पपरुः । परिता । परीता । अपिपः । अपिपूर्ताम् । अपिपरुः । पिपूर्यात् । पूर्यात् । अपारीत् । अपारिष्टाम् । ह्रस्वान्तोऽयमिति केचित् । पिपर्ति । पिपृतः । पिप्रति । पिपृयात् । आशिषि प्रियात् । अपार्षीत् । पाणिनीयमते तु तं रोदसी पिपृतमित्यादौ छान्दसत्वं शरणम् । १०८७ डुभृञ् धारणपोषणयोः ॥

२४९६ । भृञामित् ।७।४।७६। भृञ् माङ् ओहाङ् एषां त्रयाणामभ्यासस्य इत्स्यात् श्लौ । बिभर्ति । बिभृतः । बिभ्रति । बिभृध्वे । श्लुवद्भावाद् द्वित्वेत्वे । बिभरामास बभार । बभर्थ । बभृव । बिभृहि । बिभराणि । अबिभः । अबिभृताम् । अबिभरुः । बिभृयात् । भ्रियात् । भृषीष्ट । अभार्षीत् । अभृत । १०८८ माङ् माने शब्दे च ॥

२४९७ । ई हल्यघोः ।६।४।११३। श्नाभ्यस्तयोरात ईत्स्यात्सार्वधातुके क्ङिति हलि न तु घुसंज्ञकस्य । मिमीते । 'श्नाभ्यस्तयोः–२४८३' इत्यालोपः । मिमाते । मिमते । प्रण्यमास्त । १०८९ ओहाङ् गतौ । जिहीते । जिहाते । जिहते । जहे । हाता । हास्यते । १०९० ओहाक् त्यागे । परस्मैपदी । जहाति ॥

२४९८ । जहातेश्च ।६।४।११६। इत्स्याद्वा हलादौ क्ङिति सार्वधातुके । पक्षे ईत्वम् । जहितः । जहीतः । जहति । जहौ ॥

२४९९ । आ च हौ ।६।४।११७। जहातेर्हौ परे आ स्यात् चादिदीतौ । जहाहि । जहिहि । जहीहि । अजहात् । अजहुः ॥

२५०० । लोपो यि ।६।४।११८। जहातेरालोपः स्याद्यादौ सार्वधातुके । जह्यात् । 'एर्लिङि २३७४' । हेयात् । अहासीत् । १०९१ डुदाञ् दाने । प्रणिददाति । दत्तः । ददति । दत्ते । ददौ । 'घ्वसोः–२४७१' इत्येत्वाभ्यासलोपौ । देहि । अददात् । अदत्ताम् । अददुः । दद्यात् । देयात् । अदात् । अदाताम् । अदुः । अदित । १०९२ डुधाञ् धारणपोषणयोः । दानेऽप्येके । प्रणिदधाति ॥

२५०१ । दधस्तथोश्च ।८।२।३८। द्विरुक्तस्य झष-

---

शानचोऽप्रवृत्तावपि चानशन्तत्वात् ॥—**आटीति** । 'आडुत्तमस्य' इत्यनेन ॥—**परत्वादिति** । 'हुश्नुवोः' इति यणपेक्षया परत्वादित्यर्थः ॥—**भियोऽन्यतरस्याम्** । सार्वधातुके किम् । बेभीयते । बिभिये । हलादौ किम् । बिभ्यति । क्ङिति किम् । बिभेति । केचिदत्र हलादौ क्ङितीत्येतन्नातीवोपयुज्यते । इत्वविधानस्य बिभित इत्यादौ चरितार्थत्वात् । बिभ्यति बिभेतीत्यादौ यणादेः प्रवृत्तिसंभवादित्याहुः ॥—**अर्तिपिपर्त्योश्च** । अर्तेरुदाहरणमियर्तीति वक्ष्यति ॥—**उदोष्ठ्य–** । अङ्गावयवेति किम् । **ॠ** गतौ क्र्यादिस्तस्मात् क्तप्रत्यये 'श्र्युकः किति' इति इण्निषेधात् समीर्ण इति भवति । अन्यथा तु समूर्ण इति स्यात् ॥—**शॄदॄप्रां–** । शॄ हिंसायाम् । दॄ विदारणे । इमौ क्र्यादी ॥—**पक्षे गुण इति** । 'ऋच्छत्यृताम्' इत्यनेन ॥—**पप्रतुरिति** । ह्रस्वपक्षे यण् । ननु ह्रस्वग्रहणमिह मास्तु गुणानुवृत्त्या तस्यैव विकल्पोस्तु । तथाच यणादेशेन पप्रतुः शश्रतुरित्यादि सिध्यत्येव । गुणपक्षे तु पपरतुः शशरतुरित्याद्यपि सिध्यतीति चेत् । मैवम् । गुणाभावपक्षे 'ऋत इद्धातोः' इतीत्वप्रसङ्गात् । न चान्तरङ्गत्वाद्यणेव स्यादिति वाच्यम् । वार्णादाङ्गस्य बलीयस्त्वात् । **डुभृञ्** । 'ड्वितः क्त्रिः' । भृत्रिमम् ॥—**भृञामित्** । णिजां त्रयाणामित्यतोऽनुवर्तनादाह—**एषां त्रयाणामिति** । केचित्तु कपिञ्जलाधिकरणन्यायेन त्रयाणामिति लभ्यत इत्याहुः । त्रयाणां किम् । जहाति । श्लौ किम् । बभार ॥—**ई हल्यघोः** ॥ **श्नाभ्यस्तयोरिति** । लुनीते पुनीते । क्ङितीति किम् । लुनाति । अघोः किम् । धत्तः दत्तः ॥—**मिमीते इति** । 'घुमास्था–' इतीत्वमिह न प्रवर्तते तत्रार्धधातुक इत्यनुवृत्तेः । अन्यथा मातः । माथः । गाते । गासे इत्यादावतिप्रसङ्गात् । अत एव काशिकायामुक्तमार्धधातुक इत्यधिकारो न ल्यपीति योगं यावदिति ॥—**जहातेश्च** । क्ङितीति किम् । जहाति । सार्वधातुके किम् । हीयते ॥—**चादिदीताविति** । अत एव भट्टिः प्रायुङ्क्त । 'जहिहि जहीहि जहाहि रामभार्याम्' इति ॥—**लोपो यि** । सार्वेति किम् । हेयात् ॥—**प्रणिददातीति** । 'नेर्गद–' इति णत्वम् ॥—**दत्त इति** । 'श्नाभ्यस्तयोः' इत्यालोपः । अघोरित्युक्तत्वादीत्वं तु न ॥—**अदादिति** । 'गातिस्था–' इति सिचो लुक् ॥—**दधस्तथोश्च** । दध इति कृतद्विर्वचनाभ्यासकार्यो धात्वेव गृह्यते न तु दध धारण इत्ययमिति व्याचष्टे—**द्विरुक्तस्येति** ।—झषन्तस्य

न्तस्य धाञो बशो भष् स्यात्तथयोः स्ध्वोश्च परतः । वचनसामर्थ्यादालोपो न स्थानिवदिति वामनमाधवौ । वस्तुतस्तु पूर्वत्रासिद्धीये न स्थानिवत् । धत्तः । दधति । धत्थः । दध्वः । धत्ते । धत्से । धद्ध्वे । धेहि । अधित ॥

अथ त्रयः स्वरितेतः ॥ १०९३ णिजिर् शौचपोषणयोः ॥

२५०२ । णिजां त्रयाणां गुणः श्लौ ।७।४।७५। णिज्विज्विषामभ्यासस्य गुणः स्यात् श्लौ । नेनेक्ति । नेनिक्तः । नेनिजति । निनेज । नेक्ता । नेक्ष्यति । नेनेक्तु । नेनिग्धि ॥

२५०३ । नाभ्यस्तस्याचि पिति सार्वधातुके ।७।३।८७। लघूपधगुणो न स्यात् । नेनिजानि । अनेनेक् । अनेनिक्ताम् । अनेनिजुः । नेनिज्यात् । निज्यात् । अनिजत् । अनैक्षीत् । अनिक्त । १०९४ विजिर् पृथग्भावे । वेवेक्ति । वेविक्ते । विवेजिथ । अत्र 'विज इट् २५३६' इति ङित्त्वं न । ओविजी इत्यस्यैव तत्र ग्रहणात् । णिजिविजी रुधादावपि । १०९५ विष्लृ व्याप्तौ । वेवेष्टि । वेविष्टे । लृदित्त्वादङ् । अविषत् । तङि क्सः । अजादौ 'क्सस्याचि २३३७' इति अल्लोपः । अविक्षत । अविक्षाताम् । अविक्षन्त ॥

अथ आगणान्ताः परस्मैपदिनश्छान्दसाश्च ॥ १०९६ घृ क्षरणदीप्त्योः । जिघर्म्यग्निं हविषा घृतेन । 'भृञामित् २४९६', 'बहुलं छन्दसि ३५९८' इति इत्वम् । १०९७ हृ प्रसह्यकरणे । अयं स्रुवो अभिजिहर्ति होमान् । १०९८ ऋ १०९९ सृ गतौ । 'बहुलं छन्दसि ३५९८' इत्येव सिद्धे 'अर्तिपिपर्त्योश्च २४९३' इतीत्वविधानादयं भाषायामपि । 'अभ्यासस्यासवर्णे २२९०' इतीयङ् । इयर्ति । इयृतः । इय्रति । आर । आरतुः । 'इडत्यर्ति–२३८४' इति नित्यमिट् । आरिथ । अर्ता । अरिष्यति । इयराणि । ऐयः । ऐयृताम् । ऐयरुः । इयृयात् । अर्यात् । आरत् । ससर्ति । ११०० भस भर्त्सनदीप्त्योः । बभस्ति । 'घसिभसोर्हलिच ३५५०' इत्युपधालोपः । 'झलो झलि २२८१' इति सलोपः । बब्धः । बप्सति । ११०१ कि ज्ञाने । चिकेति । ११०२ तुर त्वरणे । तुतोर्ति । तुतूर्तः । तुतुरति । ११०३ धिष शब्दे । दिधेष्टि । दिधिष्टः । ११०४ धन धान्ये । दधन्ति । दधन्तः । दधनति । ११०५ जन जनने । जजन्ति ॥

२५०४ । जनसनखनां सञ्झलोः ।६।४।४२। एषामाकारोऽन्तादेशः स्याज्झलादौ सनि झलादौ क्ङिति च । जजातः । जज्ञति । जजंसि । जजान । जजन्यात् । जजायात् । जन्यात् । जायात् । ११०६ गा स्तुतौ । देवाञ्जिगाति सुम्नयुः । जिगीतः । जिगति । इति जुहोत्यादयः ॥

---

## तिङन्ते दिवादयः ४४ ।

११०७ दिवु क्रिडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु । अष्टपन्ताः परस्मैपदिनः ॥

२५०५ । दिवादिभ्यः श्यन् ।३।१।६९। शपोऽपवादः । 'हलि च ३५४' इति दीर्घः । दीव्यति । दिदेव । देविता । देविष्यति । दीव्यतु । अदीव्यत् । दीव्येत् । दीव्यात् । अदेवीत् । अदेविष्यत् । ११०८ षिवु तन्तुसन्ताने । परिषीव्यति । परिषिषेव । न्यषेवीत् । न्यसेवीत् । ११०९ स्रिवु गतिशोषणयोः । १११० ष्ठिवु

---

किम् । दधाति । नन्वेवं धत्त इत्यादावपि न स्यादाल्लोपस्य स्थानिवत्त्वेनाझषन्तत्वादत आह—**वचनसामर्थ्यादिति** ॥ —**णिजाम्** । श्लाविति किम् । निनेज ॥—**नाभ्यस्तस्य**—। अभ्यस्तस्य किम् । द्वेषाणि । अचि किम् । वेवेष्टि । पिद्ग्रहणम् 'उतो वृद्धिर्लुकि हलि' इत्युत्तरार्थम् । सार्वेति किम् । निनेज ॥—**बहुलं छन्दसीतीत्वमिति** । एतच्च पूर्वोक्तान्वयि ॥—**इयर्तीति** । अभ्यासस्य इयङ् अभ्यासादुत्तरस्य तु गुणः ॥—**इय्रतीति** । 'अदभ्यस्तात्' इत्यत् ॥—**अर्यादिति** । 'गुणोऽर्ति–' इति गुणः ॥—**आरदिति** । 'सर्तिशास्ति–' इत्यङि 'ऋदृशोऽङि–' इति गुणः ॥—**बब्ध इति** । तसस्तकारस्य 'झषस्तथोः–' इति धत्वम् ॥—**तुतूर्त इति** । 'हलि च' इति दीर्घः । **धन** धान्ये । धान्यार्जन इत्यर्थः ॥—**दधन्त इति** । छान्दसत्वात् 'अनुनासिकस्य–' इति नेह दीर्घ इत्याहुः ॥—**जनसनखनाम्**—। जन जनने, जनी प्रादुर्भावे इत्युभयोरपि ग्रहणम् । झलादौ सनि सिषासति ॥—**जज्ञतीति** । 'गमहन–' इत्युपधालोपः । —**जजायादिति** । 'ये विभाषा' इति वा आत्वम् । एवं जायादित्यत्रापि ॥—**जिगातीति** । 'बहुलं छन्दसि' इति इत्वम् । इति जुहोत्यादयः ॥

**दिवु क्रीडा** । उदित्करणं क्त्वायामिड्विकल्पार्थं निष्ठायामनिडर्थं च । देवित्वा । द्यूत्वा । द्यूतम् । क्रीडायाम्, दीव्यन्ति माणवकाः । 'विजिगीषायाम्' शत्रुं दीव्यति । विजिगीषते इत्यर्थः । कान्तिरिच्छा । द्युतेः पृथग्ग्रहणात् ॥ **षिवु** ॥—**परिषिषेवेति** । 'स्थादिष्वभ्यासेन–' इति नियमो नेह प्रवर्तते तत्र 'प्राक् सिता'दित्यनुवृत्तेः । अस्य चाप्राक्सितीयत्वात् । तेनाभ्यासस्य षत्वं 'परिनिविभ्यः–' इत्यनेन भवत्येव ॥—**न्यषेवीदिति** । 'सिवादीनां वा–' इति विकल्पः । **नृती** । ईदित्करणं 'श्वीदित–' इति निष्ठायामिण्निषेधार्थम् । यद्यपि 'सेसिचि–' इति इटो विकल्पितत्वात् 'यस्य विभाषा' इत्यनेनैवेष्टं सिध्यति, तथापि 'यस्य विभाषा' इत्यस्यानित्यत्वज्ञापनार्थमीदित्करणं, तेन 'धावितमिभराजधिया' इत्यादि

निरसने । केचिदिहेमं न पठन्ति । ११११ ष्णुसु अदने । आदान इत्येके । अदर्शन इत्यपरे । स्नुस्यति । सुष्णोस । १११२ ष्णसु निरसने । स्नस्यति । सस्नास । १११३ क्नसु ह्वरणदीप्त्योः । ह्वरणं कौटिल्यम् । चक्नास । १११४ व्युष दाहे । वुव्योष । १११५ प्लुष च १११६ नृती गात्रविक्षेपे । नृत्यति । ननर्त ॥

२५०६ । सेऽसिचि कृतचृतच्छृदतृदनृतः ।७।२।५७। एभ्यः परस्य सिच्भिन्नस्य सादेरार्धधातुकस्येड्वा स्यात् । नर्तिष्यति । नर्त्स्यति । नृत्येत् । नृत्यात् । अनर्तीत् । १११७ त्रसी उद्वेगे । 'वा भ्राश–२३२१' इति श्यन्वा । त्रस्यति । त्रसति । त्रेसतुः । तत्रसतुः । १११८ कुथ पूतीभावे । पूतीभावो दौर्गन्ध्यम् । १११९ पुथ हिंसायाम् । ११२० गुध परिवेष्टने । ११२१ क्षिप प्रेरणे । क्षिप्यति । क्षेप्ता । ११२२ पुष्प विकसने । पुष्प्यति । पुपुष्प । ११२३ तिम ११२४ ष्टिम ११२५ ष्टीम आर्द्रीभावे । तिम्यति । स्तिम्यति । स्तीम्यति । ११२६ व्रीड चोदने लज्जायां च । व्रीड्यति । ११२७ इष गतौ । इष्यति । ११२८ षह ११२९ षुह चक्यर्थे । चक्यर्थ- स्तृप्तिः । सह्यति । सुह्यति । ११३० जॄष् ११३१ झॄष् वयोहानौ । जीर्यति । जजरतुः । जेरतुः । जरिता । जरीता । जीर्येत । जीर्यात् । 'जॄस्तम्भु–२२९१' इत्यङ्वा । 'ऋदृशोऽङि गुणः २४०६' । अजरत् । अजारिष्टाम् । झीर्यति । जझरतुः । अझारीत् । ११३२ षूङ् प्राणिप्रसवे । सूयते । सुषुवे । 'स्वरतिसूति–२२७९' इति विकल्पं बाधित्वा 'श्र्युकः किति २३८१' इति निषेधे प्राप्ते क्रादिनियमान्नित्यमिट् । सुषुविषे । सुषुविवहे । सोता । सविता । ११३३ दूङ् परितापे । दूयते । ११३४ दीङ् क्षये । दीयते ॥

२५०७ । दीङो युडचि क्ङिति ।६।४।६३। दीङः परस्याजादेः क्ङित आर्धधातुकस्य युट् स्यात् ॥ ॐ वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ ॥ दिदीये ॥

२५०८ । मीनातिमिनोतिदीङां ल्यपि च ।६।१।५०। एषामात्वं स्यात् ल्यपि चकारादशित्येज्निमित्ते । दाता । दास्यते । अदास्त । अदास्थाः । ११३५ डीङ् विहायसा गतौ । डीयते । डिड्ये । ११३६ धीङ् आधारे । धीयते । दिध्ये । धेता । ११३७ मीङ् हिंसायाम् । हिंसात्र प्राणवियोगः । मीयते । ११३८ रीङ् श्रवणे ।

सिद्धम् ॥—सेऽसिचि—॥—नर्तिष्यति । नर्त्स्यतीति । निनर्तिषति । निनृत्सति । कर्तिष्यति । कर्त्स्यति । चिकर्तिषति । चिकृत्सति इत्यादि ज्ञेयम् ॥—अनर्तीदिति । असिचीत्युक्तत्वादिह नित्यमिट् ॥—त्रेसतुरिति । 'वा जॄभ्रमुत्रसाम्' इत्येत्वाभ्यासलोपौ । कुथ । पूतीभावः पवित्रीभवनम् । कुथ्यति भूमिः । पवित्रीभवतीत्यर्थः । पुष्प विकसने । 'कालात्साधु–' इत्यत्र पुष्प्यतिः शत्रन्तः । पचाद्यचि पुष्पम् । संज्ञायां कन् । पुष्पकम् । व्रीड । 'गुरोश्च हलः' इत्यप्रत्यये टाप् । व्रीडा । घञि तु व्रीडः । अत एव 'व्रीडमावहति मे स संप्रति' इति कालिदासः । 'व्रीडादिवाभ्यासगतैर्विलिल्ये' इति माघश्च । षह षुह । 'परिनिविभ्यः–' इत्यत्र सहेत्यकार उच्चारणार्थ इति षत्वमिह भवति । परिषह्यति । 'तीषसह–'इतीड्विकल्पस्तु नास्य भवति सहेति शवन्तनिर्देशात्, किं तु 'षह मर्षणे' इत्यस्यैव स इत्यात्रेयादयः । सहेति निर्देशस्योभयत्र तुल्यत्वे 'तीषसह–' इत्यत्र शपा निर्देशः । 'परिनिविभ्यः–' इत्यत्र तु नेत्यर्धजरतीयमिदं हेयमेव । तत्त्वं तु प्रयोगमनुसृत्य महद्भिरेव निर्धार्यम् । नपुंसके भावे क्तः । सुहितं तृप्तिः । अत एव 'पूरणगुण–' इति सूत्रे सुहितार्थास्तृप्त्यर्था इति व्याख्यातम् ॥—जेरतुरिति । 'ऋच्छत्यॄताम्' इति गुणे कृते 'न शसदद–' इति गुणशब्देन भावितस्य निषेधात् 'अत एकहल्मध्ये' इत्यप्रवृत्तौ 'वा जॄभ्रमुत्रसाम्' इत्येत्वाभ्यासलोपविकल्पः । षूङ् । प्रसव उत्पत्तिः । मृत्पिण्डो घटं सूयत इत्यादिप्रयोगाभावात्प्राणीत्युक्तम् । 'स्वादय ओदितः' इति वक्ष्यमाणत्वात् 'ओदितश्च' इति निष्ठातस्य नत्वम् । प्रसूनम् ॥—विकल्पमिति । परमपीति शेषः ॥—निषेधे प्राप्ते इति । पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यादिति भावः ॥—दीङो—। पञ्चमीत्यभिप्रायेण व्याचष्टे—परस्येति ॥—अजादेरिति. । ङः सीत्यत्रेव उभयनिर्देशे पञ्चमीनिर्देशो बलीयानिति सप्तम्याः षष्ठीकल्पनम् । अचि किम् । देदीयते । क्ङितीति किम् । उपदानम् । आभीयत्वेनासिद्धत्वमाशङ्क्याह—वुग्युटाविति—॥—दिदीये इति । परमपि यणं बाधित्वा नित्यत्वादादौ युट् । सति तु यणि ईकारस्य श्रवणं न स्यादिति युटः सिद्धत्वमुक्तम् ॥—मीनाति—। मी हिंसायाम् । डुमिञ् प्रक्षेपणे । प्रमाय । उपदाय । प्रमातव्यम् । उपदातव्यम् । एज्निमित्त इति विषयसप्तमी । तेन आदावात्वं पश्चाद्धल् 'आतो युक्' इति युक् । उपदाय इति सिध्यति । अन्यथा एरचि कृते तत आत्वे उपदा इति स्यात् ॥—अदास्तेति । डीङः प्रतिषेधः 'स्थाघ्वोरिच्च' इति न घुत्वमित्यदितेति रूपं न भवतीत्येके । अन्ये तु 'स्थाघ्वोरिच्च' इत्येतत्तु न भवति दीङोऽनुकरणे दारूपासंभवेनाघुत्वात् । अत एव प्रनिदातेत्यादौ 'नेर्गद–' इति णत्वमपि न भवतीत्याहुः । अयं भावः–'दो अवखण्डने' इत्यादेर्दारूपत्वं संभवति । 'आदेच उपदेशे–' इत्यस्यानैमित्तिकत्वात् । दीङस्तु एज्निमित्तप्रत्ययविषये आत्वं दा इत्यनुकरण एज्निमित्तस्याभाविलान्न घुत्वम् । एवं च घुप्रकृतित्वमपि नास्तीति णत्वस्याप्रसक्तिरिति । डीङ् । डीनः डीनवान् । स्वादिषु पाठसामर्थ्यान्निष्ठायामिण्न । इटि हि सति व्यवधानात् 'ओदितश्च' इति नत्वं न स्यादिति । स्वादिषु पाठसामर्थ्यादिड्व्यवधानेऽपि णत्वमस्त्विति न शङ्क्यमिष्टानुरोधात् । डयित इति प्रयोगस्तु भौवादिकस्य । 'निष्ठा शीङ्'त्यत्र निष्ठेति योगविभागादकित्वे गुण इत्याहुः । मीङ् हिंसायाम् । मीञ् इति क्र्यादौ ॥—प्राणवियोग इति । मीयते प्राणैर्वियुज्यत

रीयते ११३९ लीङ् श्लेषणे ॥

२५०९। विभाषा लीयतेः ।६।१।५१। लीयतेरिति यका निर्देशो न तु श्यना। लीलीङोरात्वं वा स्यादेज्विषये ल्यपि च। लेता। लाता। लेप्यते। लास्यते। एज्विषये किम्। लीयते। लिल्ये। ११४० व्रीङ् वृणोत्यर्थे। व्रीयते। विव्रिये। (ग) स्वादय ओदितः। तत्फलं तु निष्ठानत्वम्। ११४१ पीङ् पाने। पीयते। ११४२ माङ् माने। मायते। ममे। ११४३ ईङ् गतौ। ईयते। अयांचक्रे। ११४४ प्रीङ् प्रीतौ। सकर्मकः। प्रीयते। पिप्रिये ॥

अथ परस्मैपदिनश्चत्वारः ॥ ११४५ शो तनूकरणे ॥

२५१०। ओतः श्यनि ।७।३।७१। लोपः स्यात् श्यनि। श्यति। श्यतः। श्यन्ति। शशौ। शशतुः। शाता। शास्यति। 'विभाषा घ्राधेट्–२३७६' इति सिचो वा लुक्। लुगभावे 'यमरम–२३३७' इतीट्सकौ। अशात्। अशाताम्। अशुः। अशासीत्। अशासिष्टाम्। ११४६ छो छेदने। छ्यति। ११४७ षोऽन्तकर्मणि। स्यति। ससौ। अभिष्यति। अभ्यष्यत्। अभिससौ। ११४८ दो अवखण्डने। द्यति। ददौ। प्रणिदाता। देयात्। अदात् ॥

अथात्मनेपदिनः पञ्चदश ॥ ११४९ जनी प्रादुर्भावे ॥

२५११। ज्ञाजनोर्जा ।७।३।७९। अनयोर्जादेशः स्याच्छिति। जायते। जज्ञे। जज्ञाते। जज्ञिरे। जनिता। जनिष्यते। 'दीपजन–२३२८' इति वा चिण् ॥

२५१२। जनिवध्योश्च ।७।३।३५। अनयोरुपधाया वृद्धिर्न स्याच्चिणि ञ्णिति कृति च। अजनि। अजनिष्ट। ११५० दीपी दीप्तौ। दीप्यते। दिदीपे। अदीपि। अदीपिष्ट। ११५१ पूरी आप्यायने। पूर्यते। अपूरि। अपूरिष्ट। ११५२ तूरी गतित्वरणहिंसनयोः। तूर्यते। ११५३ धूरी ११५४ गूरी हिंसागत्योः। धूर्यते। दुधूरे। गूर्यते। जुगूरे। ११५५ घूरी ११५६ जूरी हिंसावयोहान्योः। ११५७ शूरी हिंसास्तम्भनयोः। ११५८ चूरी दाहे। ११५९ तप ऐश्वर्ये वा। अयं धातुरैश्वर्ये वा तङ्श्यनौ लभते। अन्यदा तु शब्विकरणः परस्मैपदीत्यर्थः। केचित्तु वाग्रहणं वृतुधातोराद्यवयवमिच्छन्ति। तप्यते। तप्ता। तप्स्यते। पतेति व्यत्यासेन पाठान्तरम्। द्युतद्यामा नियुतः पत्यमानः। ११६० वृतु वरणे। वृत्यते। पक्षान्तरे वावृत्यते। ततो वावृत्यमाना सा रामशालां न्यविक्षतेति भट्टिः। ११६१ क्लिश उपतापे। क्लिश्यते। क्लिशिता। ११६२ काशृ दीप्तौ। काश्यते। ११६३ वाशृ शब्दे। वाश्यते। ववाशे ॥

अथ पञ्च स्वरितेतः॥ ११६४ मृष तितिक्षायाम्। मृष्यति। मृष्यते। ममर्ष। ममृषे। ११६५ ईं शुचिर् पूतीभावे। पूतीभावः क्लेदः। शुच्यति। शुच्यते। शुशोच। शुशुचे। अशुचत्। अशोचीत्। अशोचिष्ट। ११६६ णह बन्धने। नह्यति। नह्यते। ननाह। ननद्ध। नेहिथ। नेहे। नद्धा। नत्स्यति। अनात्सीत्। ११६७ रञ्ज रागे। रज्यति। रज्यते। ११६८ शप आक्रोशे। शप्यति। शप्यते ॥

अथैकादशानुदात्तेतः॥ ११६९ पद गतौ। पद्यते। पेदे। पत्ता। पद्येत। पत्सीष्ट ॥

२५१३। चिण् ते पदः ।३।१।६०। पदश्च्लेश्चिण्

---

इत्यर्थः। लीङ्। ली श्लेषण इति क्र्यादौ ॥—यकेति। 'सार्वधातुके यक्' इति विहितेन॥—न तु श्यनेति॥ अन्यथा लीङ् इत्येव ब्रूयादिति भावः। यका निर्देशस्य फलमाह—लीलीङोरिति। ल्यपि। विलाय। विलीय। व्रीङ् वृणोत्यर्थे। वरणम्। वृञ् वरण इति स्वादौ पठिष्यमाणत्वात्। वरणे इति वक्तव्ये वृणोत्यर्थ इति वचनं वैचित्र्यार्थम्। व्री वरण इति क्र्यादौ। माङ्॥—मायत इति। 'घुमास्था–' इतीत्वं तु न। तत्रार्धधातुक इत्यधिकारात्॥—षोऽन्त—। अन्तकर्म नाशनम्। 'राघवस्य शरैर्घोरैर्घोरं रावणमाहवे' इति। राघवेति संबुद्ध्यन्तम्। स्येति लोण्मध्यमैकवचनम्॥—अभिष्यतीति। 'उपसर्गात्सुनोति–' इति षत्वम्॥—अभ्यष्यदिति। 'प्राक्सितादड्व्यवायेऽपि' इति षत्वम्॥—अभिससाविति। 'स्थादिषु–' इति नियमान्न षत्वम्। दो अवखण्डने। अवेत्युपसर्गप्रयोगो वैचित्र्यार्थः। खण्डने इत्येतावत्युक्तेऽपीष्टसिद्धेः॥—प्रणिदातेति। 'नेर्गदे'ति णत्वम्॥—देयादिति। 'एर्लिङि' इत्येत्वम्॥—अदादिति। 'गातिस्था–' इति सिचो लुक्॥—ज्ञाजनोर्जा। जानाति। शिति किम्। ज्ञाता। ज इति ह्रस्वोच्चारणेऽपि 'अतो दीर्घो यञि' इति दीर्घे सिद्धे जाग्रहणमङ्गवृत्तपरिभाषाज्ञापनार्थम्। तेन पाधातोः पिबादेशे कृते गुणो न भवति पिबादेशस्यादन्तत्वाश्रयणं तूपायान्तरमित्याहुः॥—ञिति णिति कृति चेति। ञिति कृत्युदाहरणं घञि जनः। णिति कृति तु जनकः। जनयतीत्यत्रोपधावृद्धौ सत्यां 'जनीजॄष्–' इति मित्त्वात् 'मितां ह्रस्वः' इति ह्रस्वः। दीपी दीप्तौ। ईदित्त्वान्निष्ठायामिण्न। दीप्तः। एवं पूरीत्यादेरीदित्त्वात्पूर्ण इत्यादि ज्ञेयम्॥—केचिदिति। तेषां मते ऐश्वर्ये तप्यते इत्येव प्रयोगो न तु तपतीति॥—न्यविक्षतेति। निपूर्वाद्विशतेर्लुङि 'शल इगुपधा–' इति क्सः। 'नेर्विशः' इति तङ्। वाशृ शब्दे। 'मन्दिवाशि–' इत्युरच्। वाशुरा रात्रिः॥—तितिक्षायामिति। 'गुप्तिज्किद्भ्यः–' इति सन्। तत्र हि 'तिजेः क्षमायां'मित्युक्तम्। ईंशुचिर्। ईदित्त्वान्नेट्। शुक्तम्। क्लिन्नमित्यर्थः॥—ननद्धेति। 'नहो धः' इति धत्वम्॥—चिण्

स्तात्तशब्दे परे । प्रण्यपादि । अपत्साताम् । अपत्सत । **११७० खिद दैन्ये** । खिद्यते । चिखिदे । खेत्ता । अखित्त । **११७१ विद सत्तायाम्** । विद्यते । वेत्ता । **११७२ बुध अवगमने** । बुध्यते । बुबुधे । बोद्धा । भोत्स्यते । भुत्सीष्ट । अबोधि । अबुद्ध । अभुत्साताम् । **११७३ युध संप्रहारे** । युध्यते । युयुधे । योद्धा । अयुद्ध । कथं युध्यतीति । युधमिच्छतीति क्यच् ॥ (प) अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यमिति वा । **११७४ अनो रुध कामे** । अनुरुध्यते । **११७५ अण प्राणने** । अण्यते । आणे । अणिता । अनेति दन्त्यान्तोऽयमित्येके । **११७६ मन ज्ञाने** । मन्यते । मेने । मन्ता । **११७७ युज समाधौ** । समाधिश्चित्तवृत्तिनिरोधः । अकर्मकः । युज्यते । योक्ता । **११७८ सृज विसर्गे** । अकर्मकः । संसृज्यते सरसिजैररुणांशुभिन्नैः । ससृजिषे । स्रष्टा । स्रक्ष्यते । 'लिङ्सिचौ–२३००' इति किच्वान्न गुणो नाप्यम् । सृक्षीष्ट । असृष्ट । असृक्षाताम् । **११७९ लिश अल्पीभावे** । लिश्यते । लेष्टा । लेक्ष्यते । लिक्षीष्ट । अलिक्षत । अलिक्षाताम् ॥

**अथागणान्ताः परस्मैपदिनः ॥ ११८० राधोऽकर्मकाद्वृद्धावेव** । एवकारो भिन्नक्रमः । राधोऽकर्मकादेव श्यन् । उदाहरणमाह वृद्धाविति । यन्मह्यमपराध्यति । द्रुह्यतीत्यर्थः । विराध्यन्तं क्षमेत कः । द्रुह्यन्तमित्यर्थः । राध्यत्योदनः । सिध्यतीत्यर्थः । कृष्णाय राध्यति । दैवं पर्यालोचयतीत्यर्थः । दैवस्य धात्वर्थेऽन्तर्भावाज्जीवत्यादिवदकर्मकत्वम् । रराध । रराधतुः । रराधिथ । 'राधो हिंसायाम् २५३२' इत्येत्वाभ्यासलोपाविह न । हिंसार्थस्य सकर्मकतया दैवादिकत्वायोगात् । राद्धा । रात्स्यति । अयं स्वादिश्चुरादिश्च । **११८१ व्यध ताडने** । 'ग्रहिज्या–२४१२' इति संप्रसारणम् । विध्यति । विव्याध । विविधतुः । विव्यद्ध । विव्यधिथ । व्यद्धा । व्यत्स्यति । विध्येत् । विध्यात् । अव्यात्सीत् । **११८२ पुष पुष्टौ** । पुष्यति । पुपोष । पुपोषिथ । पोष्टा । पोक्ष्यति । 'पुषादि–२३४३' इत्यङ् । अपुषत् । **११८३ शुष शोषणे** । अशुषत् । **११८४ तुष प्रीतौ** । **११८५ दुष वैकृत्ये** । **११८६ श्लिष आलिङ्गने** । श्लिष्यति । शिश्लेष । श्लेष्टा । श्लेक्ष्यति ॥

२५१४ । **श्लिषः**—अस्मात्परस्यानिटश्च्लेः क्सः स्यात् । पुषाद्यङोऽपवादो न तु चिणः । पुरस्तादपवादन्यायात् ॥

**आलिङ्गने** ।३।१।४६। श्लिषश्च्लेरालिङ्गन एव क्सो नान्यत्र । योगविभागसामर्थ्याच्छल इगुपधादित्यस्याप्ययं नियमः । अश्लिक्षत्कन्यां देवदत्तः । आलिङ्गन एवेति किम् । समश्लिषज्जतु काष्ठम् । अङ् । प्रत्यासत्ताविह श्लिषिः । कर्मणि अनालिङ्गने सिजेव न तु क्सः । एकवचने चिण् । अश्लेषि । अश्लिक्षाताम् । अश्लिक्षत । अश्लिष्ठाः । अश्लिड्ढ्वम् । **११८७ शक विभाषितो मर्षणे** । विभाषित इत्युभयपदीत्यर्थः । शक्यति । शक्यते हरिं द्रष्टुं भक्तः । शशाक । शेकिथ । शशक्थ । शेके । शक्ता । शक्ष्यति । शक्ष्यते । अशकत् । अशक्त । सेक्तोऽयमित्येके । तन्मतेनानिड्कारिकासु लृदित्पठितः । शकिता । शकिष्यति । **११८८ ष्विदा गात्रप्रक्षरणे** । घर्मस्रुताविल्यर्थः । अयं ञीदिति न्यासकारादयः । नेति हरदत्ता-

---

ते पदः । तशब्द इति सामर्थ्यादात्मनेपदप्रथमपुरुषैकवचनम् । तशब्दे किम् । अपत्थाः ॥—**प्रण्यपादीति** । 'चिणो लुक्' इति तशब्दस्य लुक् । 'नेर्गद–' इति णत्वम् ॥—**अबोधीति** । 'दीपजनबुध–' इति चिण् । **अनो रुध कामे** । अनोः परो रुधधातुः कामे । काम इच्छा । दिवादिषु पाठसामर्थ्यात् 'रुधादिभ्यः–' इति श्नमं बाधित्वा श्यन् ॥—**नाप्यमिति** । 'सृजिदृशोर्झल्यमकिति' इत्यकित्येव विधानात् । **लिश** । आतपादिनानल्पस्य अल्पभावोऽल्पीभावः ॥—**लिक्षीष्टेति** । लिङ्सिचावात्मनेपदेषु' इति किच्वान्न गुणः ॥—**अलिक्षतेति** । 'शल इगुपधाद्–' इति क्सः ॥—**राधोऽकर्मकात्**—। भिन्नक्रमं दर्शयति—**अकर्मकादेवेति** । राधो वृद्धावेव श्यन्निति व्याख्यायामकर्मकादिति विशेषणं व्यर्थं स्याद् वृद्धावस्याकर्मकत्वात् । अकर्मकात्किम् । शत्रुमपराध्नोति । हिनस्तीत्यर्थः । राध संसिद्धाविति स्वादौ । राधो हिंसायामित्यनुवादाद्धिंसायामप्ययम् ॥—**उदाहरणमाहेति** । अकर्मकत्वप्रयोजकस्य यस्य कस्यचिदर्थस्येति भावः । अकर्मके श्यन्नन्तस्य प्रयोगान्दर्शयति—**यन्मह्यमित्यादिना** ॥—**कृष्णायेति** । 'राधीक्ष्योः–' इति चतुर्थी ॥—**अपुषदिति** । ङित्वाद्गुणाभावः । **शुष** । शोष्टा । शोक्ष्यति ॥—'श्लिष आलिङ्गने' इति सूत्रं योगविभागेन व्याचष्टे—**श्लिष इति** ॥—**अनिटश्च्लेः क्स इति** । एतच्च 'च्लेः सिच्' 'शल इगुपधात्–' इत्यतोऽनुवर्तत इति भावः । अनिटः किम् । 'श्लिषु दाहे' इति भौवादिकस्य सेटो माभूत् । अश्लेषीत् । 'शल इगुपध–' इति सिद्धे पुनः क्सविधेः फलमाह—**पुषाद्यङ इति** ॥—**सामर्थ्यादिति** । यदि हि श्लिष इति प्राप्त एव क्सो नियम्येत तर्हि योगविभागो व्यर्थः स्यादिति भावः ॥—**शल इगुपधादित्यस्यापीति** । तेन कर्मण्यातांप्रभृतिष्वनालिङ्गने सिजेव भवति न तु क्सः । समश्लिक्षत जतूनि काष्ठैरिति क्सप्रत्यये सति तु समाश्लिक्षन्तेति स्यादिति भावः ॥—**प्रत्यासत्ताविति** । आलिङ्गनं हि प्राणिकर्तृकं न तु काष्ठादिकर्तृकमिति भावः । श्लिषश्च्लेरालिङ्गन एव क्स इति व्याख्यानफलं दर्शयति—**कर्मणीत्यादिना** । अश्लिक्षातामित्यादौ यद्यपि क्ससिचोर्विशेषो नास्ति 'क्सस्याचि' इत्यकारलोपात्तथापि थासादावस्त्येव विशेष इति ध्वनयन्नुदाहरति—**अश्लिष्ठाः । अश्लिड्ढ्वमिति** ॥—**न्यासकारादय इति** । तथा च तन्मते 'ञीतः क्तः' इति

दयः । स्विद्यति । सिष्वेद । सिष्वेदिथ । स्वेत्ता । अस्विदत् । ११८९ क्रुध क्रोधे । क्रोद्धा । क्रोत्स्यति । ११९० क्षुध बुभुक्षायाम् । क्षोद्धा । कथं क्षुधित इति । संपदादिक्विबन्तात्तारकादित्वादितजिति माधवः । वस्तुतस्तु 'वसतिक्षुधोः-३०४६' इतीट् वक्ष्यते । ११९१ शुध शौचे । शुध्यति । शुशोध । शोद्धा । ११९२ षिधु संराद्धौ । ऊदित्पाठः प्रामादिकः । सिध्यति । सेद्धा । सेत्स्यति । असिधत् । ११९३ रध हिंसासंराद्ध्योः । संराद्धिर्निष्पत्तिः । रध्यति । 'रधिजभोरचि २३०२' इति नुम् । ररन्धतुः ॥

२५१५ । रधादिभ्यश्च ।७।२।४५। रध नश् तृप् दृप् द्रुह् मुह् ष्णुह् ष्णिह् एभ्यो वलाद्यार्धधातुकस्य वेट् स्यात् । ररन्धिथ । ररद्ध । ररन्धिव । रेध्व ॥

२५१६ । नेट्यलिटि रधेः ।७।१।६२। लिड्वर्जे इटि रधेर्नुम्न स्यात् । रधिता । रद्धा । रधिष्यति । रत्स्यति । अङि नुम् । 'अनिदिताम्-४१५' इति नलोपः । अरधत् । ११९४ णश अदर्शने । नश्यति । ननाश । नेशतुः । नेशिथ ॥

२५१७ । मस्जिनशोर्झलि ।७।१।६०। नुम् । स्यात् । ननष्ठ । नेशिव । नेश्व । नेशिम । नेश्म । नशिता । नंष्टा । नशिष्यति । नङ्क्ष्यति । नश्येत् । नश्यात् । अनशत् । प्रणश्यति ॥

२५१८ । नशेः षान्तस्य ।८।४।३६। णत्वं न स्यात् । प्रनंष्टा । अन्तग्रहणं भूतपूर्वप्रतिपत्त्यर्थम् । प्रनङ्क्ष्यति । नशिष्यति । ११९५ तृप प्रीणने । प्रीणनं तृप्तिस्तर्पणा च । नाग्निस्तृप्यति काष्ठानाम् । पितॄनताप्सीदिति भट्टिः । इत्युभयत्र दर्शनात् । ततर्पिथ । तत्रप्थ । ततर्प्थ तर्पिता । तर्प्ता । त्रप्ता । ॐ स्पृशमृशकृषेति सिज्वा । अताप्सीत् । अत्राप्सीत् । अतर्पीत् । अतृपत् । ११९६ दृप हर्षमोहनयोः । मोहनं गर्वः । दृप्यतीत्यादि । रधादित्वादिमौ वेट्कावमर्थमनुदात्तता । ११९७ द्रुह जिघांसायाम् । 'वा द्रुहमुह-३२७' इति वा घः । पक्षे ढः । दुद्रोग्ध । दुद्रोढ । दुद्रोहिथ । द्रोहिता । द्रोग्धा । द्रोढा । द्रोहिष्यति । ध्रोक्ष्यति । ढत्वघत्वयोस्तुल्यं रूपम् । अद्रुहत् । ११९८ मुह वैचित्त्ये । वैचित्त्यमविवेकः । मुह्यति । मुमोहिथ । मुमोग्ध । मुमोढ । मोग्धा । मोढा । मोहिता । मोहिष्यति । मोक्ष्यति । अमुहत् । ११९९ ष्णुह उद्गिरणे । स्नुह्यति । सुष्णोह । सुष्णोहिथ । सुष्णोग्ध । सुष्णोढ । सुष्णुहिव । सुष्णुह्व । स्नोहिता । स्नोग्धा । स्नोढा । स्नोहिष्यति । स्नोक्ष्यति । अस्नुहत् । १२०० ष्णिह प्रीतौ । स्निह्यति । सिष्णेह । वृत् ॥ रधादयः समाप्ताः ॥ पुषादयस्तु आ गणान्तादिति सिद्धान्तः । १२०१ शमु उपशमे ॥

२५१९ । शमामष्टानां दीर्घः श्यनि ।७।३।७४। शमादीनामित्यर्थः । प्रणिशाम्यति । शेमतुः । शेमिथ । शमिता । अशमत् । १२०२ तमु काङ्क्षायाम् । ताम्यति । तमिता । अतमत् । १२०३ दमु उपशमे । उपशमे इति ण्यन्तस्य । तेन सकर्मकोऽयम् । न तु शमिवदकर्मकः । अदमत् । १२०४ श्रमु तपसि खेदे च । श्राम्यति । अश्रमत् । १२०५ भ्रमु अनवस्थाने । 'वा भ्राश-२३२१' इति श्यन्वा । तत्र कृते 'शमामष्टानाम्-२५१९' इति दीर्घः । भ्राम्यति । लुङ्यङ् । अभ्रमत् । शेषं भ्वादिवत् । १२०६ क्षमू सहने । क्षाम्यति । चक्षमिथ । चक्षन्थ । चक्षमिव । चक्षण्व । चक्षमिम । चक्षण्म । क्षमिता । क्षन्ता । अयमपित् । भ्वादिस्तु पित् । अपितः क्षाम्यति क्षान्तिः क्षमूपः क्षमते क्षमा । १२०७ क्लमु ग्लानौ । क्लाम्यति । क्लामति । शपीव श्यन्यपि 'ष्ठिवुक्लमु-२३२०' इत्येव दीर्घे सिद्धे शमादिपाठो घिनुणर्थः । अङ् । अक्लमत् । १२०८ मदी हर्षे । माद्यति । अमदत् ॥ शमादयोऽष्टौ गताः ॥

१२१० असु क्षेपणे । अस्यति । आस । असिता ॥

२५२० । अस्यतेस्थुक् ।७।४।१७। अङि परे । आ-

---

वर्तमाने क्तो भवति । आदित्त्वान्निष्ठायां नेट् । स्विन्नः । 'विभाषा भावादिकर्मणोः' । स्विन्नम् । स्वेदितमित्यादि सिद्धम् । **षिधु** । संराद्धिर्निष्पत्तिः । 'उदितो वा' इति क्त्वायामिड्विकल्पः । इट्पक्षे 'रलो व्युपधात्-' इति वा कित्त्वम् । सिधित्वा । सेधित्वा । सिद्ध्वा ॥—**प्रामादिक इति** । ऊदित्त्वे त्वनुदात्तेषु सिध्यतेः पाठो व्यर्थः स्यादिति भावः ॥—**रधादिभ्यश्च** । 'स्वरतिसूति-' इत्यतो वेत्यनुवर्तते । योगविभागो वैचित्र्यार्थः । गणनिर्देशाद्यङ्लुकि रारधितेत्येव न तु रारद्धेति ॥—**नेट्यलिटि**— । इटीति किम् । रन्धकः । अलिटीति किम् । ररन्धिव । नुमि कृते संयोगात्परत्वेनाकित्त्वान्नलोपो न ॥—**नंष्टेति** । 'नशेर्वा' इति कुत्वमिह न शङ्क्यं पदान्त एव तद्विधानात् । अन्यथा नष्टं नष्टिरित्यादि न सिध्येत् ॥—**प्रणश्यतीति** । 'उपसर्गादसमासेऽपि-' इति णत्वम् ॥—**नशेः** । 'न भाभूपूकमिगमि-' इत्यतो नेत्यनुवर्तते तदाह—**णत्वं न स्यादिति** । षस्येत्युक्तेऽपि पदस्येत्यस्य विशेषणेन षान्तस्येति लाभादन्तग्रहणं व्यर्थं सञ्ज्ञापयतीत्याह—**भूतपूर्वेति** ॥—**काष्ठानामिति** । करणस्य शेषत्वविवक्षायां षष्ठी ॥—**तत्रप्थेति** । 'अनुदात्तस्य चर्दुपधस्य-' इति विकल्पेनामागमः ॥—**रधादय इति** । रधनशतृपदृपद्रुहमुहष्णुहष्णिह इत्यर्थः । **शमु** । उदित्त्वात्क्त्वायां वेट् । शमित्वा । शान्त्वा । 'यस्य विभाषा' इति निष्ठायामनिट् । शान्तः ॥ **भ्रमु** अनवस्थाने ॥—**शेषमिति** । श्यनि दीर्घो लुङि अङ् च विशेष उक्तस्ततोऽन्यदित्यर्थः ॥—**चक्षण्वेति** । 'म्वोश्च' इति मस्य नत्वे कृते णत्वम् ॥—**शमादिपाठ**

स्यत्। अस्य पुषादित्वादङि सिद्धे 'अस्यतिवक्ति-२४३८' इति वचनं तङर्थम्। तङ् तु उपसर्गादस्यत्यूह्योरिति वक्ष्यते। पर्यास्यत। १२११ यसु प्रयत्ने॥

२५२१। यसोऽनुपसर्गात्।३।१।७१।

२५२२। संयसश्च।३।१।७२। श्यन्वा स्यात्। यस्यति। यसति। संयस्यति। संयसति। अनुपसर्गात्किम्। प्रयस्यति। १२१२ जसु मोक्षणे। जस्यति। १२१३ तसु उपक्षये। १२१४ दसु च। तस्यति। अतसत्। दस्यति। अदसत्। १२१५ वसु स्तम्भे। वस्यति। ववास। ववसतुः। 'न शसदद-२२६३' इति निषेधः। वशादिरयमिति मते तु। वेसतुः। वेसुः। १२१६ व्युष विभागे। अयं दाहे पठितः। अर्थभेदेन त्वङर्थं पुनः पठ्यते। अव्युषत्। ओष्ठ्यादिर्दन्त्यान्तोऽयं प्युस इत्यन्ये। अपकारो युस इत्यपरे। १२१७ प्लुष दाहे। अप्लुषत्। पूर्वत्र पाठः सिजर्थ इत्याहुः। तद् भ्वादिपाठेन गतार्थमिति सुवचम्। १२१८ बिस प्रेरणे। बिस्यति। अबिसत्। १२१९ कुस संश्लेषणे। अकुसत्। १२२० बुस उत्सर्गे। १२२१ मुस खण्डने। १२२२ मसी परिणामे। परिणामो विकारः। समी इत्येके। १२२३ लुठ विलोडने। १२२४ उच समवाये। उच्यति। उवोच। ऊचतुः। मा भवानुचत्। १२२५ भृशु १२२६ भ्रंशु अधःपतने। बभर्श। अभृशत्। 'अनिदिताम्-४१५' इति नलोपः। भ्रश्यति। अभ्रशत्। १२२७ वृश वरणे। वृश्यति। अवृशत्। १२२८ कृश तनूकरणे। कृश्यति। १२२९ ञितृषा पिपासायाम्। १२३० हृष तुष्टौ। श्यन्नङौ भौवादिकाद्विशेषः। १२३१ रुष १२३२ रिष हिंसायाम्। 'तीषसह-२३४०' इति वेट्। रोषिता। रोष्टा। रेषिता। रेष्टा। १२३३ डिप क्षेपे। १२३४ कुप क्रोधे। १२३५ गुप व्याकुलत्वे। १२३६ युप १२३७ रुप १२३८ लुप विमोहने। युप्यति। रुप्यति। लुप्यति। लोपिता। लुप्यतिः सेट्कः। अनिट्कारिकासु लिपिसाहचर्यात्तौदादिकस्यैव ग्रहणात्। १२३९ लुभ गार्ध्ये। गार्ध्यमाकाङ्क्षा। 'तीषसह-२३४०' इति वेट्। लोभिता। लोब्धा। लोभिष्यति। लुभ्येत्। लुभ्यात्। अलुभत्। भ्वादेरवृत्कृतत्वाल्लोभतीत्यपीत्याहुः। १२४० क्षुभ संचलने। क्षुभ्यति। १२४१ णभ १२४२ तुभ हिंसायाम्। क्षुभिनभितुभयो द्युतादौ क्र्यादौ च पठ्यन्ते। तेषां द्युतादित्वादङ् सिद्धः। क्र्यादित्वात्पक्षे सिज्भवत्येव। इह पाठस्तु श्यनर्थः। १२४३ क्लिदू आर्द्रीभावे। क्लिद्यति। चिक्लेदिथ। चिक्लेत्थ। चिक्लिदिव। चिक्लिद्व। चिक्लिदिम। चिक्लिद्म। क्लेदिता। क्लेत्ता। १२४४ ञिमिदा स्नेहने। 'मिदेर्गुणः २३४६'। मेद्यति। अमिदत्। द्युतादिपाठादेवामिदत् अमेदिष्टेति सिद्धे इह पाठोऽमेदीदिति माभूदिति। द्युतादिभ्यो बहिरेवात्मनेपदिषु पाठस्तूचितः। १२४५ ञिक्ष्विदा स्नेहनमोचनयोः। १२४६ ऋधु वृद्धौ। आनर्ध। आर्धत्। १२४७ गृधु अभिकाङ्क्षायाम्। अगृधत्। वृत्। पुषादयो दिवादयश्च वृत्ताः। केचित्तु पुषादिसमाप्त्यर्थमेव वृत्करणम्। दिवादिस्तु भ्वादिवदाकृतिगणः। तेन क्षीयते सूयतीत्यादिसिद्धिरित्याहुः॥ इति दिवादयः॥

## तिङन्ते स्वादयः ४५।

१२४८ षुञ् अभिषवे। अभिषवः स्नपनं पीडनं स्नानं सुरासंधानं च। तत्र स्नानेऽकर्मकः॥

२५२३। स्वादिभ्यः श्नुः।३।१।७३। सुनोति। सुनुतः। 'हुश्नुवोः-२३८७' इति यण्। सुन्वन्ति। सुन्वः। सुनुवः। सुन्वहे। सुनुवहे। सुषाव। सुषुवे। सोता। सुनु। सुनवानि। सुनवै। सुनुयात्। सूयात्। 'स्तुसुधूञ्भ्यः-२३८५' इतीट्। असावीत्। असोष्ट। अभिषुणोति। अभ्यषुणोत्। अभिसुषाव॥

२५२४। सुनोतेः स्यसनोः।८।३।११७। स्ये सनि च परे सुञः षो न स्यात्। विसोष्यति। १२४९ षिञ् बन्धने। सिनोति। विसिनोति। सिषाय। सिष्ये। १२५० शिञ् निशाने। तालव्यादिः। शेता। १२५१ डुमिञ् प्रक्षेपणे। 'मीनातिमिनोति-२५०८' इत्यात्वम्। ममौ। ममिथ। ममाथ। मिम्ये। माता। मीयात्। मासीष्ट। अमासीत्। अमासिष्टाम्। अमास्त। १२५२ चिञ् चयने। प्रणिचिनोति॥

२५२५। विभाषा चेः।७।३।५८। अभ्यासात्परस्य चिञः कुत्वं वा स्यात्सनि लिटि च। प्रणिचिकाय। चि-

---

इति। 'शमित्यष्टाभ्यो घिनुण्' ॥—शमादय इति। शमुतमुदमुश्रमुश्रमुक्षमुक्लमुमद इत्यर्थः॥—यसोऽनुप—। अत्र वदन्ति। यस इत्येवास्तु। ततः समः नियमार्थमिदम्। सोपसर्गाद्यसश्चेत्संपूर्वकादेवेति। एवं च पूर्वसूत्रेऽनुपसर्गादिति ग्रहणमुत्तरत्र च यसश्चेति ग्रहणं त्यक्तुं शक्यमिति॥—दाहे पठित इति। व्युष दाह इत्यस्मिन्नेव गणे पठित इत्यर्थः॥—अङर्थमिति। दाहे पठितस्य तु सिजेव। अव्योषीत्॥ इति दिवादयः॥

षुञ्॥—सुन्व इति। 'लोपश्चास्या-' इत्युकारस्य वा लोपः॥—सुनवानीति। 'आडुत्तमस्य-' इत्याटि कृते 'हुश्नुवोः-' इति यणं बाधित्वा परत्वाद्गुणः॥—सुनोतेः स्यसनोः। 'न रपर-' इत्यस्मान्नेत्यनुवर्तनादाह—षो न स्यादिति। सनि तु अभिसुसूः। सन्नन्तादस्मात्क्विप्यतो लोपे रुत्वे कृते दीर्घः। सुसूषतीत्येतत्तु नोदाहरणम् 'स्तौतिण्योरेव षणि' इति नियमेनैव षत्वाभावसिद्धेः। एतच्च काशिकायां स्पष्टम्। चिञ्। चयनं रचनाविशेषः॥—विभाषा चेः। 'चजोः' इति सूत्रात्कुरनुवर्तते 'सन्लिटोर्जेः' इत्यतः सन्लिटोरिति च। सन्युदाहरणम्। चिकीषति। चिची-

चाय । चिक्ये । चिच्ये । अचैषीत् । अचेष्ट । **१२५३ स्तृञ्** आच्छादने । स्तृणोति । स्तृणुते । 'गुणोर्ति–२३८०' इति गुणः । स्तर्यात् ॥

**२५२६ । ऋतश्च संयोगादेः** ।७।२।४३। ऋदन्तात्संयोगादेः परयोर्लिङ्सिचोरिड्वा स्यात्तङि । स्तरिषीष्ट । स्तृषीष्ट । अस्तरिष्ट । अस्तृत । **१२५४ कृञ्** हिंसायाम् । कृणोति । कृणुते । चकार । चकर्थ । चक्रे । क्रियात् । कृषीष्ट । अकार्षीत् । अकृत । **१२५५ वृञ्** वरणे ॥

**२५२७ । बभूथाततन्थजगृम्भववर्थेति निगमे** ।७।२।६४। एषां वेदे इडभावो निपात्यते । तेन भाषायां थलीट् । ववरिथ । ववृव । ववृवहे । वरिता ॥

**२५२८ । लिङ्सिचोरात्मनेपदेषु** ।७।२।४२। वृङ्वृञ्भ्यामृदन्ताच्च परयोर्लिङ्सिचोरिड्वा स्यात्तङि ॥

**२५२९ । न लिङि** ।७।२।३९। वृतो लिङ इटो दीर्घो न स्यात् । वरिषीष्ट । वृषीष्ट । अवारीत् । अवरिष्ट । अवरीष्ट । अवृत । **१२५६ धुञ्** कम्पने । धुनोति । धुनुते । अधौषीत् । अधोष्यत् । दीर्घान्तोऽप्ययम् । धूनोति । धूनुते । 'स्वरतिसूति–२२७९' इति वेट् । दुधविथ । दुधोथ । किति लिटि तु 'श्र्युकः–२३८१' इति निषेधं बाधित्वा क्रादिनियमान्नित्यमिट् । दुधुविव । 'स्तुसुधूञ्भ्यः–२३८५' इति नित्यमिट् । अधावीत् । अधविष्ट । अधोष्ट ॥

**अथ परस्मैपदिनः ॥ १२५७ टुदु** उपतापे । दुनोति । **१२५८ हि** गतौ वृद्धौ च ॥

**२५३० । हिनुमीना** ।८।४।१५। उपसर्गस्थान्निमित्तात्परस्य एतयोर्नस्य णः स्यात् । प्रहिणोति ॥

**२५३१ । हेरचङि** ।७।३।५६। अभ्यासात्परस्य हिनोतेर्हस्य कुत्वं स्यान्न तु चङि । जिघाय । **१२५९ पृ** प्रीतौ । पृणोति । पर्ता । **१२६० स्पृ** प्रीतिपालनयोः । प्रीतिचलनयोरित्यन्ये । चलनं जीवनमिति स्वामी । स्पृणोति । पस्पार । **स्मृ** इत्येके । स्मृणोति । पृणोत्यादयस्त्रयश्छान्दसा इत्याहुः । **१२६१ आपॢ** व्याप्तौ । आप्नोति । आप्नुतः । आप्नुवन्ति । आप्नुवः । आप । आप्ता । आप्नुहि । ऌदित्त्वादङ् । आपत् । **१२६२ शक्ऌ** शक्तौ । अशकत् । **१२६३ राध १२६४ साध** संसिद्धौ । राध्नोति ॥

**२५३२ । राधो हिंसायाम्** ।६।४।१२३। एत्वाभ्यासलोपौ स्तः किति लिटि सेटि थलि च । अपरेधतुः । रेधुः । रेधिथ । राद्धा । साध्नोति । साद्धा । असात्सीत् । असाद्धाम् ॥

**अथ द्वावनुदात्तेतौ ॥ १२६५ अशू** व्याप्तौ संघाते च । अश्नुते ॥

**२५३३ । अश्नोतेश्च** ।७।४।७२। दीर्घादभ्यासावर्णात्परस्य नुट् स्यात् । आनशे । अशिता । अष्टा । अशिष्यते । अक्ष्यते । अश्नुवीत । अक्षीष्ट । अशिषीष्ट । आशिष्ट । आष्ट । आक्षाताम् । **१२६६ ष्टिघ** आस्कन्दने । स्तिघ्नुते । तिष्टिघे । स्तेघिता ॥

**अथ आगणान्तात्परस्मैपदिनः ॥ १२६७ तिक १२६८ तिग** गतौ च । चादास्कन्दने । तिक्नोति । तिग्नोति । **१२६९ षघ** हिंसायाम् । सघ्नोति । **१२७० ञिधृषा** प्रागल्भ्ये । धृष्णोति । दधर्ष । धर्षिता । **१२७१ दम्भु** दम्भने । दम्भनं दम्भः । दभ्नोति । ददम्भ । श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः किरवं वेति व्याकरणान्तरमिहाप्याश्रीयत इत्युक्तम् । 'अनिदिताम्–४१५' इति नलोपः । तस्याभीयत्वेनासिद्धत्वादेत्वाभ्यासलोपयोरप्राप्तौ ॥ ॐ **दम्भेश्च** ॥ एत्वाभ्यासलोपौ वक्तव्यौ । देभतुः । ददम्भतुः । इदं किरवं पिदपिद्विषयकमिति सुधाकरादयः । तन्मते तिप्सिप्मिप्सु । देभ । देभिथ । देभेति रूपान्तरं बोध्यम् । अपिद्विषयकमिति न्यासकारादिमते तु । ददम्भ । ददम्भिथ । ददम्भेत्येव । दभ्यात् । **१२७२ ऋधु** वृद्धौ । **तृप** प्रीणन इत्येके ।

---

षति ॥—**ऋतश्च संयोगादेः** । 'इट् सनि वा' इत्यत इट् वेत्यनुवर्तते । 'लिङ्सिचोः–' इति सूत्रादात्मनेपदेष्विति च तदाह—**इड् वा स्यात्तङीति** । तङि किम् । अस्तार्षीत् ॥—**बभूथाततन्थ**—। भूधातोस्तनोतेश्च थलि इडभावो निपात्यते । 'त्वं हि होता प्रथमो बभूथ' । 'येनान्तरिक्षमुर्वाततन्थ' । भाषायां तु बभूविथ । तेनिथ । 'जगृम्भाते दक्षिणमिन्द्र हस्तम्' । भाषायां तु जगृहिम । वृणोतेस्थलि क्रादिसूत्रेणेण्निषेधे सिद्धेऽपि निगम एव निषेधो नान्यत्रेति नियमार्थं ववर्थग्रहणम् । 'ववर्थ त्वं हि ज्योतिषाम्' । भाषायां ववरिथ । ववृषे ॥—**लिङ्सिचोः**—। वृत इत्यनुवर्तते । आत्मनेपदेषु किम् । अवारीत् । अवारिष्टाम् । अवारिषुः । 'सिचि च परस्मैपदेषु' इति निषेधादिह 'वृतो वा' इति न दीर्घः ॥—**हिनु मीना** । प्रमीणाति ॥—**हेरचङि** । जेघीयते । अचङीति किम् । अजीहयत् । इह ण्यन्तस्य धात्वन्तरत्वात्केवलस्य त्वभ्यासनिमित्तप्रत्ययपरत्वाभावात्कुत्वप्राप्तिरेव नास्तीत्यचङीति निषेधो व्यर्थः सन् ज्ञापयति ण्यधिकस्यापि कुत्वं भवतीति । तेन जिघापयिषतीत्यादि सिद्धम् ॥—**आप्नुहीति** । संयोगपूर्वत्वात् 'उतश्च प्रत्ययात्–' इति हेर्लुङ् न ॥—**राधो हिंसायाम्** । अत इत्यनुवर्तमानेऽपि सामर्थ्यादकारमात्रं स्थानित्वेनाश्रीयते ॥—**अश्नोतेश्च** । 'तस्मान्नुड्'इत्यनुवर्तत इत्याह—**दीर्घादिति** । श्नुविकरणनिर्देशः किम् । क्र्यादेरश भोजन इत्यस्य माभूत् । आश । आशतुः । **ञिधृषा** । शूलेन धृष्णोति प्रगल्भते इति शूलधृक् । शूलधृषौ । 'ऋत्विक्दधृक्–' इति क्विनो विधानादन्यत्रापि पदान्तविषये कुत्वम् । **दम्भु** । लोकवञ्चनाय विहितकर्मानुष्ठानं दम्भः । **तृप** । अयं सेट्कः । अनुदात्तेषु श्यना निर्दे-

क्षुभ्नादित्वाण्णत्वं न । तृप्नोति । (ग) छन्दसि । आ गणान्तादधिकारोऽयम् । १२७३ अह व्याप्तौ । अह्नोति । १२७४ दघ घातने पालने च । दघ्नोति । १२७५ चमु भक्षणे । चम्नोति । १२७६ रि १२७७ क्षि ११७८ चिरि १२७९ जिरि १२८० दाश १२८१ दृ हिंसायाम् । रिणोति । क्षिणोति । अयं भाषायामपीत्येके । न तद्यशः शस्त्रभृतां क्षिणोति । ऋक्षीत्येक एवाजादिरित्यन्ये । ऋक्षिणोति । चिरिणोति । जिरिणोति । दाश्नोति । दृणोति ॥ इति स्वादयः ॥

---

## तिङन्ते तुदादयः ४६ ।

१२८२ तुद व्यथने ॥ इतः षट् स्वरितेतः ॥

२५३४ । तुदादिभ्यः शः ।३।१।७७। तुद प्यु- दाहे । तुदते । तुतोद । तुतोदिथ । तुतुदे । तोत्ता । अतौत्सीत् । अतुत्त । १२८३ णुद प्रेरणे । नुदति । नुदते । नुनोद । नुनुदे । नोत्ता । १२८४ दिश अतिसर्जने । अतिसर्जनं दानम् । देष्टा । दिक्षीष्ट । अदिक्षत् । अदिक्षत । १२८५ भ्रस्ज पाके । 'ग्रहिज्या-२४१२' इति संप्रसारणम् । सस्य श्चुत्वेन शः । शस्य जश्त्वेन जः । भृज्जति । भृज्जते ॥

२५३५ । भ्रस्जो रोपधयो रमन्यतरस्याम् ।६।४।४७। भ्रस्जे रेफस्योपधायाश्च स्थाने रमागमो वा स्यादार्धधातुके । मित्त्वादन्त्यादचः परः । स्थानषष्ठीनिर्देशाद्रोपधयोर्निवृत्तिः । बभर्ज । बभर्जतुः । बभर्जिथ । बभर्ष्ठ । बभर्ज्जे । रमभावे । बभ्रज्ज । बभ्रज्जतुः । बभ्रज्जिथ । 'स्कोः-३८०' इति सलोपः । 'व्रश्च-२९४' इति षः । बभ्रष्ठ । बभ्रज्जे । भ्रष्टा । भर्ष्टा । भ्रक्ष्यति । भर्क्ष्यति ॥

---

शात् । अह व्याप्तौ । अस्मात् 'ऋहलोर्ण्यत्' स्वादिपाठेन ति 'तस्यादित उदात्तमर्धह्रस्वम्' इत्यत्रास्माभिरुपपादितम् । अन्ये त्वाहुः । 'शतचक्रं यो१ह्यो वर्तनिः' इत्यत्र विस्यति 'षष्ठ्यन्तमेव । 'घेर्ङिति' इति गुणस्तु अहिशब्दस्य च्छान्दसत्वान्नेति । **रिक्षि** । एते षट् धातवः । एक एवाजादिरिति मते तु पञ्च धातवः ॥ इति स्वादयः ॥

**तुदतीति** । परमपि लघूपधगुणं बाधित्वा नित्यत्वात् श इत्येके । अकृतव्यूहपरिभाषया गुणो न प्रवर्तत इत्यन्ये । **भ्रस्ज** पाके । भर्जनरूपः पाकोऽत्र धात्वर्थो न लोदनादेः पाकस्तत्र प्रयोगाभावादित्याहुः । भ्रस्जो इति केषांचित्पाठे तु 'ओदितश्च' इति निष्ठानत्वप्रसक्त्या भृष्टः भृष्टवानिति न सिध्येत् ॥—**भ्रस्जो रोपधयोः**—। रम्यकार उच्चारणार्थः । रमित्यस्यान्त्यादचः परत्वे 'रोपधयोः' इति षष्ठीनिर्देशस्य वैयर्थ्यमाशङ्क्याह—**निवृत्तिरिति** । अयं भावः—स्थानविशेषलाभाय मित्त्वस्य करणान्न रोपधयोः स्थाने रम् भवति । यत्र ह्यनिर्धारितः स्थानषष्ठ्या निर्दिश्य विधीयते स तत्स्थाने भवति । यथा 'इको यणचि' इत्यादौ यणादिः । प्रकृते तु रमो निर्दिष्टस्थानिकत्वाद्रोपधयोः स्थाने न भवति । एवं चास्य आदेशागमत्वे भवतो यथा श्नमः प्रत्ययागमत्वे इति । अन्ये त्वेतादृग् व्याख्यानमयुक्तमिति मत्वा 'सनः क्तिचि' इत्यतो लोपमनुवर्त्य भ्रस्जो रोपधयोर्लोपः रम् तु आगम एवेत्याहुः । अपरे तु 'भ्रस्जो रसरन्यतरस्याम्' इत्येव सूत्रमस्तु । रसः ऋ इति च्छेदः । रस इति रेफाकारसकाराणां यः संघातस्तस्य ऋ इत्यादेशः स्यादित्यर्थः । ततश्च अक्ङिति भर्जको भर्जनं बभर्जेत्यादि सिध्यति । ऋकाराभावपक्षे तु भ्रज्जको भ्रज्जनं बभ्रज्जेत्यादि । क्ङिति तु ऋकारपक्षे भृष्टिः भृज्यादित्यादि । तदभावे संप्रसारणे सति तदेव रूपम् । एवं च वरीभृज्यत इत्यादौ रीको रेफस्य निवृत्तिं वारयितुम् 'अनुदात्तोपदेश–' इत्यत उपदेशग्रहणमनुवर्त्यमिदानीं तु नानुवर्त्यं, क्ङिति रमागमं बाधित्वा संप्रसारणमिति पूर्वविप्रतिषेधश्च न कर्तव्य इति महदेव लाघवमित्याहुः । इदं च रसोर्वचनात्सिद्धमिति वार्तिकाशयवर्णनमेव न त्वपूर्वम् । वचनादित्यस्य वा ऋवचनादिति छेदः । भाष्यकारैस्तु 'सूत्रं भिद्यते यथान्यासमेवास्तु' इति वदद्भिरस्यां कल्पनायां दुष्टत्वं सूचितं तच्च मनोरमायां स्पष्टमेव । तथा हि रेफाकारसमुदायस्य ऋभावे पञ्च दोषाः । अपिल्लिटि बभर्जतुः बभर्जुरित्यादीष्यते, बभृजतुः बभृजुरित्यादि स्यात् । न चात्र गुणेन निर्वाहः । ऋभावे सति 'असंयोगाल्लिट् कित्' इति कित्त्वप्रवृत्त्या तन्निषेधात् । 'सनीवन्त–' इति इड्विकल्पाद्बिभर्क्षतीत्यादि इष्यते, बिभृक्षतीत्यादि स्यात् । ऋभावे 'हलन्ताच्च' इति सनः कित्त्वप्रवृत्तेः । लिङ्सिचोस्तङि भर्क्षीष्ट अभर्ष्टेत्यादीष्यते । भृक्षीष्ट अभृष्टेत्यादि स्यात् । 'लिङ्सिचावात्मनेपदेषु' इति कित्त्वाद् णिजन्ताच्चङि अबभर्जदितीष्यते । अबीभृजदित्यपि स्यात् । इररारामपवादत्वेन 'उर्ऋत्' इति ऋत्वप्रवृत्तौ 'सन्वल्लघुनि–' इति सन्वद्भावात् 'सन्यतः' इतीत्वे 'दीर्घो लघोः' इति प्रवृत्तेः । यद्यपि 'उर्ऋत्' इत्यस्य वैकल्पिकत्वादबभर्जदिति सिध्यत्येव तथापि पक्षे अबीभृजदित्यनिष्टं स्यादिति बोध्यम् । ऋजिभृजी भर्जने इति भ्वादेस्तादृशं रूपमिष्टमिति चेत् । मैवम् । भर्जनार्थे हि तादृग् रूपमिष्टं न तु पाकसामान्ये । उभयोरेकार्थत्वाभ्युपगमेऽपि प्राचीनाश्चत्वारो दोषास्तु दृढा एव । न हि तेऽपि धात्वन्तरेण सुपरिहराः । अपिल्लिटि भृजेरपि धातोर्गुणाभावादनुदात्तत्वेन आत्मनेपदित्वाच्च बभर्जतुरित्यादिरूपस्य तेनाप्यसिद्धेः । तथा भृजेरुदात्तत्वेन ततः परेषां सन्लिङ्सिचामिडागमध्रौव्यात् । बिभर्क्षति भर्क्षीष्ट अभर्ष्टेत्यादिरपि तेन न सिध्यति । एतेन भ्रस्जेर्भृजिरादेश इति पक्षोऽपि निरस्तः । पूर्वोक्तदूषणगणप्रसङ्गात् । किं च अस्मिन्पक्षे यङ्लुकि अधिको दोषः । वधादेशवत्साभ्यासस्य भृज्ज्यादेशे पुनर्द्विर्वचनस्य दुर्लभत्वात्स्थानिवत्त्वेनानभ्यासस्येति निषेधात् । स्वीकृतेऽपि द्विर्वचने रुग्रिग्रीकोऽभ्यासस्य स्युरेवेति रुगादिरहितं बाभर्जिता बाभर्जिष्यतीत्यादि रूपं नैव सिध्येत् । यदि तु लाघवे पक्षपातेन स्वातन्त्र्यं चिकीर्ष्यते

ॐ क्ङिति रमागमं बाधित्वा संप्रसारणं पूर्वविप्रतिषेधेन ॥ भृज्ज्यात् । भृज्ज्यास्ताम् । भर्क्षीष्ट भ्रक्षीष्ट । अभार्क्षीत् । अभ्राक्षीत् । अभर्ष्ट । अभ्रष्ट । १२८६ क्षिप प्रेरणे । क्षिपति । क्षिपते । क्षेप्ता । अक्षैप्सीत् । अक्षिप्त । १२८७ कृष विलेखने । कृषति । कृषते । क्रष्टा । कर्ष्टा । कृष्यात् । कृक्षीष्ट । ॐ स्पृशमृशकृषेति सिज्वा । पक्षे क्सः । सिचि अम्वा । अक्राक्षीत् । अकार्क्षीत् । अकृक्षत् । तङि 'लिङ्सिचौ–२३००' इति किर्त्वादम्न । अकृष्ट । अकृक्षाताम् । अकृक्षत । अकृक्षाताम् । अकृक्षन्त[1] । १२८८ ऋषी गतौ । परस्मैपदी । ऋषति । आनर्ष । १२८९ जुषी प्रीतिसेवनयोः ॥ आत्मनेपदिनश्चत्वारः। जुषते । १२९० ओविजी भयचलनयोः । प्रायेणायमुत्पूर्वः । उद्विजते ॥

२५३६ । विज इट् ।१।२।२। विजेः पर इडादिः प्रत्ययो ङिद्वत् । उद्विजिता । उद्विजिष्यते । १२९१ ओलजी १२९२ ओलस्जी व्रीडायाम् । लजते । लेजे । लज्जते । ललज्जे ॥

अथ परस्मैपदिनः ॥ १२९३ ओव्रश्चू छेदने । 'ग्रहिज्या–२४१२' । वृश्चति । वव्रश्च । वव्रश्चतुः । वव्रश्चिथ । वव्रष्ठ । 'लिट्यभ्यासस्य–२४०८' इति संप्रसारणम् । रेफस्य ऋकारः । 'उरत् २२४४' तस्य'अचः परस्मिन्–५०' इति स्थानिवद्भावात् 'न संप्रसारणे–३६३' इति वस्योत्वं न । व्रश्चिता । व्रष्टा । व्रश्चिष्यति । व्रक्ष्यति । वृश्च्यात् । अव्रश्चीत् । अव्राक्षीत् । १२९४ व्यच व्याजीकरणे । विचति । विव्याच । विविचतुः । व्यचिता । व्यचिष्यति । विच्यात् । अव्याचीत् । अव्यचीत् । ॐ व्यचेः कुटादित्वमनसीति तु नेह प्रवर्तते । अनसीति पर्युदासेन कृन्मात्रविषयत्वात् । १२९५ उछि उञ्छे । उञ्छति । १२९६ उच्छी विवासे । उच्छति । १२९७ ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु । 'ऋच्छत्यृताम् २३८३' इति

तर्हि भ्रस्जे रसोरिति पठित्वा रसिति समुदायस्य अरेव विधीयतां तथा च न कोपि दोष इति । अयमत्र संग्रहः—'रस ऋचेदपिल्लिट्सन्लिङ्सिच्चङ्परणिक्षु ते । दोषो भ्रस्जेर्भृजौ चैवं दोषो यङ्लुकि चाधिकः ॥ साभ्यासस्य हि भृज्भावो भवेद्धन्तेर्वधिर्यथा । द्वित्वं पुनर्न लभ्येत स्थानिवत्त्वाद्वधेरिव ॥ तस्मादस्तु यथान्यासं स्वातन्त्र्येऽस्तु रसोरिति' ॥—**पूर्वविप्रतिषेधेनेति** । नित्यत्वादित्यपि सुवचम् । न च संप्रसारणात्पूर्वं धातो रेफस्य पश्चात्तु रमागमे रेफस्येति शब्दान्तरप्राप्त्या संप्रसारणस्य नित्यत्वं नेति शङ्क्यम् । लक्ष्यानुरोधेन कृताकृतप्रसङ्गित्वेनापि क्वचिन्नित्यत्वस्वीकारात् ॥—**विज इट्** । इह 'वृद्धिर्यस्य–' इति सूत्रान्मण्डूकप्लुत्या यस्यादिरिति अनुवर्तते तेन इडादिप्रत्ययो लभ्यत इति मनोरमायां स्थितम् । नव्यास्तु इह इडित्यनेनोत्तमैकवचनं न गृह्यते । तथा च सति विजिषीयेत्यत्रैव स्यान्न तूद्विजितेत्यादौ । ततश्चेष्टसिध्यर्थमिडागमो गृह्यते तस्य तु ङित्त्वं व्यर्थम् । तन्निमित्तगुणस्याप्राप्तेरतो लक्षणया इड्वान् गृह्यते । इट्प्रत्ययस्यादिरिति फलितार्थकथनमिडादिप्रत्ययो ङिद्वदिति । एवं च इडादिरिति लाभाय यस्यादिरित्यनुवर्तनक्लेशो व्यर्थ एवेत्याहुः । इह ओविजीति तुदादिः रुधादिश्च गृह्यते न तु विजिर् पृथग्भावे इति जुहोत्यादिर्व्याख्यानात् । यस्त्वत्र हरदत्तेन जुहोत्यादेरग्रहणे हेतुरुक्तः तस्यानिट्कत्वादिति । तदयुक्तम् । क्रादिनियमेन लिटि इट्संभवात् । न च तत्र कित्त्वेन गतार्थत्वादिटो ङित्त्वं व्यर्थमिति वाच्यम् । अपिप्लिटः कित्त्वेऽपि विवेजिथेत्यत्र पित्त्वेन ङित्त्वाभावात् ॥—**वव्रश्चेति** । अत्र नव्याः । वव्रश्चेत्यादौ 'लिट्यभ्यासस्य–' इत्यभ्यासावयवयोर्द्वयोरपि यणोः संप्रसारणप्रसक्तौ पूर्वस्य यणो निषेधाय 'न संप्रसारणे–' इति सूत्रं स्वीक्रियते । ततश्च अत एव ज्ञापकात्परस्य प्रथमं संप्रसारणमिति परिकल्प्य आ पादपरिसमाप्तेरङ्गाधिकार इति पक्षमभ्युपगम्य उरदत्वस्याङ्गाक्षिप्तप्रत्ययनिमित्तकत्वस्वीकारात् 'अचः परस्मिन्–' इति स्थानिवद्भावप्रवृत्त्या संप्रसारणपरत्वमाश्रित्य वकारस्य संप्रसारणनिषेधः कथंचिदुपपद्यते । परस्य संप्रसारणं परस्य यणः संप्रसारणमिति वा सूत्रिते परस्यैव संप्रसारणं न तु पूर्वस्य यण इत्यर्थलाभाद् उक्तक्लेशं विनैव वव्रश्च यून इत्यादि सर्वं सिध्यति ॥ नचैवं 'लिटि वयो यः' 'वेञः' इत्यत्र संप्रसारणनिषेधाय नञोऽनुवृत्तिर्न लभ्येतेति वाच्यम् । 'न लिटि वयो यः' इति सूत्रकरणे बाधकाभावात् 'न संप्रसारणे–' इति यथाश्रुतसूत्रप्रणयने त्वन्ततो मात्राद्वयस्याधिक्याच्च । एवं च लघूपायेनेष्टसिद्धौ 'न संप्रसारणे–' इति सूत्रारम्भो ज्ञापयति निमित्तभेदाभावेऽपि स्थानिभेदे पुनरपि कार्यं प्रवर्तते इति । तथा च सुध्युपास्य इत्यादौधकारस्य द्वित्वे कृते पुनरुकारात्परस्य दकारस्यापि द्वित्वमिति प्रक्रियाकारादिव्याख्यानं सूत्रकाराभिप्रेतमेव । यदि स्थानिभेदेऽपि निमित्तैक्ये कार्याप्रवृत्तिः क्वचिद् दृश्यते तत्र तु 'ज्ञापकसिद्धं न सर्वत्र' इति स दोषः परिहियतामित्याहुः ॥—**अव्रश्चीदिति** । ऊदित्त्वात्पक्षे इट् । 'वदव्रज–' इति वृद्धेः 'नेटि' इति निषेधः ॥—**अव्राक्षीदिति** । 'स्कोः' इति सलोपः 'व्रश्च' इति षः । षढोरिति कः । ततः सस्य षत्वम् । न चात्र सकारस्य कथं लोप इति वाच्यम् । धातुपाठे सकारस्य पाठात् । तदाहुः—'नकारजावनुस्वारपञ्चमौ झलि धातुषु । सकारजः शकारश्च षाट्टवर्गस्तवर्गजः' इति । **व्यच** । व्याजीकरणं छद्मकरणम् ॥—**पर्युदासेनेति** । प्रसज्यप्रतिषेधे हि वाक्यभेदोऽसमर्थसमासश्च प्रसज्येतेति भावः ॥—**कृन्मात्रविषयत्वादिति** । तेन उद्विचिता उद्विचितुमित्यत्र संप्रसारणं भवति । व्यचिता व्यचिषेत्यादौ तु तिङ्विषये न भवति ।

१ अकृक्षन्तेति—क्सादेशोऽनत इत्युक्तेरदादेशो न भवतीति बोध्यम् ।

गुणः। द्विहल्ग्रहणस्यानेकहलुपलक्षणत्वान्नुट्। आनर्छ। आनर्छतुः। ऋच्छिता। १२९८ मिच्छ उत्क्लेशे। उत्क्लेशः पीडा। मिमिच्छ। अमिच्छीत्। १२९९ जर्ज १३०० चर्च १३०१ झर्झ परिभाषणभर्त्सनयोः। १३०२ त्वच संवरणे। तत्वाच। १३०३ ऋच स्तुतौ। आनर्च। १३०४ उब्ज आर्जवे। १३०५ उज्झ उत्सर्गे। १३०६ लुभ विमोहने। विमोहनमाकुलीकरणम्। लुभति। लोभिता। लोब्धा। लोभिष्यति। १३०७ रिफ कत्थनयुद्धनिन्दाहिंसादानेषु। रिफति। रिरेफ। रिहेत्येके। शिशुं न विप्रा मतिभी रिहन्ति। १३०८ तृप[1] १३०९ तृम्फ तृप्तौ। आद्यः प्रथमान्तः। द्वितीयो द्वितीयान्तः। द्वावपि द्वितीयान्तावित्यन्ये। तृपति। ततर्प। तर्पिता। ❀ स्पृशमृशेति सिज्विकल्पः पौषादिकस्यैव अङपवादत्वात्। तेनात्र नित्यं सिच्। अतर्पीत्। तृम्फति। शस्य ङित्वात् 'अनिदिताम्–४१५' इति नलोपे॥ ❀ शे तृम्फादीनां नुम्वाच्यः॥ आदिशब्दः प्रकारे। तेन येऽत्र नकारानुषक्तास्ते तृम्फादयः। तृम्फति। ततृम्फ। तृम्फ्यात्। १३१० तुप १३११ तुम्प १३१२ तुफ १३१३ तुम्फ हिंसायाम्। तुपति। तुम्पति। तुफति। तुम्फति। १३१४ दृप १३१५ दृम्फ उत्क्लेशे। प्रथमः प्रथमान्तः। द्वितीयो द्वितीयान्तः। प्रथमो द्वितीयान्त इत्येके। दृपति। दृम्फति। १३१६ ऋफ १३१७ ऋम्फ हिंसायाम्। ऋफति। आनर्फ। ऋम्फति। ऋम्फांचकार।

१३१८ गुफ १३१९ गुम्फ ग्रन्थे। गुफति। जुगोफ। गुम्फति। जुगुम्फ। १३२० उभ १३२१ उम्भ पूरणे। उभति। उवोभ। उम्भति। उम्भांचकार। १३२२ शुभ १३२३ शुम्भ शोभार्थे। शुभति। शुम्भति। १३२४ दृभी ग्रन्थे। दृभति। १३२५ चृती हिंसाग्रन्थनयोः। चर्तिता। 'सेसिचि–२५०६' इति वेट्। चर्तिष्यति। चर्त्स्यति। अचर्तीत्। १३२६ विध विधाने। विधति। वेधिता। १३२७ जुड गतौ। तवर्गपञ्चमान्त इत्येके। जुडति। मरुतो जुनन्ति। १३२८ मृड सुखने। मडति। मर्डिता। १३२९ पृड च। पृडति। १३३० पृण प्रीणने। पृणति। पपर्ण। १३३१ वृण च। वृणति। १३३२ मृण हिंसायाम्। १३३३ तुण कौटिल्ये। तुतोण। १३३४ पुण कर्मणि शुभे। पुणति। १३३५ मुण प्रतिज्ञाने। १३३६ कुण शब्दोपकरणयोः। १३३७ शुन गतौ। १३३८ द्रुण हिंसागतिकौटिल्येषु। १३३९ घुण १३४० घूर्ण भ्रमणे। १३४१ षुर ऐश्वर्यदीप्त्योः। सुरति। सुषोर। आशिषि सूर्यात्। १३४२ कुर शब्दे। कुरति। कूर्यात्। अत्र 'न भकुर्छुराम् १६२९' इति निषेधो न। करोतेरेव तत्र ग्रहणादित्याहुः। १३४३ खुर छेदने। १३४४ मुर संवेष्टने। १३४५ क्षुर विलेखने। १३४६ घुर भीमार्थशब्दयोः। १३४७ पुर अग्रगमने। १३४८ वृहू उद्यमने। दन्त्योष्ठ्यादिः। पवर्गीयादिरित्यन्ये। १३४९ तृहू १३५० स्तृहू १३५१

विव्याचेत्। ऋफति। आनर्फ। ऋम्फति। ऋम्फांचकार॥ **गुफ**। कुटादित्वे जातेऽपि न क्षतिः। 'गाङ्कुटादिभ्यः' इति सूत्रे अञ्णितः प्रत्यया ङितः स्युरित्युक्तत्वात्। उत्तमे णलि तु णित्त्वाभावपक्षे ङित्त्वात्संप्रसारणे विव्यचेति न सिध्येदिति अनसीति पर्युदास आवश्यक इति बोध्यम्। 'उछि उञ्छे' 'उछी विवासे'। इमौ भ्वादिगणे व्याख्यातौ। इह पाठस्तु उच्छतिउञ्छतीत्यत्र 'आच्छीनद्योः' इति नुम्विकल्पार्थः। पूर्वपाठस्तु स्वरार्थः। तथाहि। उञ्छति उच्छतीत्यादौ पिद्वचने शप्तिवादीनां पित्त्वादनुदात्तत्वे धातुस्वरेणाद्युदात्तं पदम्। शे तु प्रत्ययस्वरेण मध्योदात्तमिति। न च 'सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः' इति वक्ष्यमाणत्वात्कथमिह मध्योदात्ततेति वाच्यम्। कुरुत इत्यादौ तसादेर्विकरणात्परत्वेन तत्स्वरस्योदात्तस्य विकरणस्वरापेक्षया प्रबलत्वेऽपि शस्य धातोः परत्वेन धातुस्वरापेक्षया शस्वरस्योदात्तस्य प्रबलत्वात्॥—**उपलक्षणत्वादिति**। अत एव अदुपधस्य चेत् अश्नोतेरेवेति नियममाश्रित्य द्विहल्ग्रहणं भाष्यकारैः प्रत्याख्यातम्। अन्यथा तन्न संगच्छेतेति भावः॥—**आनर्छेति**। अनृच्छ इति पर्युदासान्नाम्। नव्यास्तु 'ऋच्छत्यॄताम्' इति लिटि परे गुणविधानसामर्थ्यादामभावः सिद्ध इति 'इजादेः' इति सूत्रे अनृच्छ इत्येतत्स्पष्टप्रतिपत्त्यर्थमित्याहुः। अन्ये तु 'ऋच्छत्यॄताम्' इत्यत्र तौदादिकऋच्छेरिति सर्वैरेव व्याख्यातत्वात् गणान्तरेऽपि ऋच्छिरस्तीत्यनुमीयते तद्धातोस्तु लिट्याम्निवारणाय अनृच्छ इत्येतदावश्यकमित्याहुः। **मिच्छ**। उत्कटः क्लेश उत्क्लेशः। **ऋच** स्तुतौ। ऋच्यते स्तूयते देवतादिकमनयेति ऋक् बाहुलकादिह करणे क्विप्। लोभिता। लोब्धा। 'तीषसह–' इति वेट्॥—**शिशुं न विप्रा इति**। नशब्द इवार्थे। विप्रा ब्राह्मणाः शिशुमिव मतिभी रिहन्ति हिंसन्ति। न्यूनीकुर्वन्तीत्यर्थः। **चृती** हिंसाग्रन्थनयोः। ईदित्करणं 'श्वीदितो निष्ठायाम्' इतीण्निषेधार्थम्। यद्यप्यस्य वेट्कत्वान्निष्ठायामिण्निषेधः सिध्यति तथापि 'यस्य विभाषा' इत्यस्यानित्यतां ज्ञापयितुमीदित्करणम्। तेन 'धावितमिभराजधिया' इत्यादि सिद्धमित्याहुः। **कुर** शब्दे॥—**करोतेरेवेति**। सुप्रसिद्धत्वात्। कुर्यादित्युक्ते हि लोकानां कृञ एवोपस्थितिर्भवति न त्वस्येति भावः। **मुर** संवेष्टने। इगुपधलक्षणः कः। मुरो दैत्यः मुरारिर्विष्णुः। **क्षुर** विलेखने। विलेखनं छेदनम्। केशान् क्षुरति। 'इगुपधे'ति कः।

१ **तृपतृंफेति**—'शे मुचादीनाम्' इति सूत्रभाष्ये 'शे तृंपादीनां नुम् वाच्यः तृम्पति, तृम्फति' इति पाठदर्शनाद्योऽपि सनकारः प्रतीयते। मूलं तु धातुवृत्त्यनुसारीति बोध्यम्।

**तृंहू** हिंसार्थाः । तृहति । ततर्ह । स्तृहति । तस्तर्ह । स्तर्हिता । स्तर्ढा । अतृंहीत् । अतार्क्षीत् । अताण्र्ढाम् । १३५२ इष इच्छायाम् । 'इषुगमि–२४००' इति छः । इच्छति । एषिता । एष्टा । एषिष्यति । इष्यात् । ऐषीत् । १३५३ मिष स्पर्धायाम् । मिषति । मेषिता । १३५४ किल श्वैत्यक्रीडनयोः । १३५५ तिल स्नेहने । १३५६ चिल वसने । १३५७ चल विलसने । १३५८ इल स्वप्नक्षेपणयोः । १३५९ विल संवरणे । दन्त्योष्ठ्यादिः । १३६० बिल भेदने । ओष्ठ्यादिः । १३६१ णिल गहने । १३६२ हिल भावकरणे । १३६३ शिल १३६४ षिल उञ्छे । १३६५ मिल श्लेषणे । १३६६ लिख अक्षरविन्यासे । लिलेख । १३६७ कुट कौटिल्ये । 'गाङ्कुटादिभ्यः–२४६१' इति ङित्त्वम् । चुकुटिथ । चुकोट । चुकुट । कुटिता । १३६८ पुट संश्लेषणे । १३६९ कुच सङ्कोचने । १३७० गुज शब्दे । १३७१ गुड रक्षायाम् । १३७२ डिप क्षेपे । १३७३ छुर छेदने । 'न भकुर्छुराम् १६२९' इति न दीर्घः । छुर्यात् । १३७४ स्फुट विकसने । स्फुटति । पुस्फोट । १३७५ मुट आक्षेपमर्दनयोः । १३७६ त्रुट छेदने । 'वाभ्राश–२३२१' इति श्यन्वा । त्रुट्यति । त्रुटति । तुत्रोट । त्रुटिता । १३७७ तुट कलहकर्मणि । तुटति । तुतोट । तुटिता । १३७८ चुट १३७९ छुट छेदने । १३८० जुड बन्धने । १३८१ कड मदे । १३८२ लुट संश्लेषणे । १३८३ कृड घनत्वे । घनत्वं सान्द्रता । चकर्ड । कृडिता । १३८४ कुड बाल्ये । १३८५ पुड उत्सर्गे । १३८६ घुट प्रतिघाते । १३८७ तुड तोडने । तोडनं भेदः । १३८८ थुड १३८९ स्थुड संवरणे । थुडति । तुथोड । तुस्थोड । खुड छुड इत्येके । १३९० स्फुर १३९१ स्फुल संचलने । स्फुर स्फुरणे । स्फुल संचलन इत्येके ॥

**२५३७ । स्फुरतिस्फुलत्योर्निर्निविभ्यः** ।८।३।७६। षत्वं वा स्यात् । निःष्फुरति । निःस्फुरति । स्फर इत्यकारोपधं केचित्पठन्ति । पस्फार । १३९२ स्फुड १३९३ चुड १३९४ बुड संवरणे । १३९५ क्रुड १३९६ भृड निमज्जन इत्येके । १३९७ गुरी उद्यमने । अनुदात्तेत् । गुरते । जुगुरे । गुरिता । १३९८ णू स्तवने । दीर्घान्तः । परिणूतगुणोदयः ॥ इतश्चत्वारः परस्मैपदिनः ॥ नुवति । अनुवीत् । १३९९ धू विधूनने । धुवति । १४०० गु पुरीषोत्सर्गे । जुगुविथ । जुगुथ । गुता । गुष्यति । अगुषीत् । 'ह्रस्वादङ्गात् २३६९' । अगुताम् । अगुषुः । १४०१ ध्रु गतिस्थैर्ययोः । ध्रुव इति पाठान्तरम् । आद्यस्य ध्रुवतीत्यादि गुवतिवत् । द्वितीयस्तु सेट् । दुध्रुविथ । ध्रुविता । ध्रुविष्यति । ध्रूयात् । अध्रुवीत् । अध्रुविष्टाम् । १४०२ कुङ् शब्दे । दीर्घान्त इति कैयटादयः । कुविता । अकुविष्ट । ह्रस्वान्त इति न्यासकारः । कुता । अकुत । वृत् । कुटादयो वृत्ताः ।

१४०३ पृङ् व्यायामे । प्रायेण व्याङ्पूर्वः । रिङ् । इयङ् । व्याप्रियते । व्यापप्रे । व्यापप्राते । व्यापरिष्यते । व्यापृत । व्यापृषाताम् । १४०४ मृङ् प्राणत्यागे ॥

**२५३८ । म्रियतेर्लुङ्लिङोश्च** ।१।३।६१। लुङ्लिङोः शितश्च प्रकृतिभूतान्मृङस्तङ् नान्यत्र । ङित्त्वं स्वरार्थम् । म्रियते । ममार । ममर्थ । मम्रिव । मर्तासि । मरिष्यति । मृषीष्ट । अमृत ॥

---

क्षुरः शस्त्रम् । **तिल** स्नेहने । तिलति । 'इगुपध–' इति कप्रत्यये तिलः । तिल गतौ । तेलतीति शपि गतम् । **लिख** अक्षरविन्यासे । लिखितुं लिखिष्यतीति प्रयोगः प्रामादिकः । यत्तु कैश्चित् कुटस्यादिः कुटादिः कुटः आदिर्येषां ते कुटादयः कुटादिश्च कुटादयश्च कुटादयः इत्येकशेषं स्वीकृत्य लिखितुमित्यादि समर्थितम् । तदसत् । लेखिता लेखिष्यतीत्यादौ गुणनिषेधापत्तेः । न चेष्टापत्तिः । वृत्तिकारहरदत्तादिग्रन्थविरोधात् । 'गाङ्लिखादिभ्यः' इत्येव सूत्रितव्ये कुटादिभ्य इति पठनस्य स्वारस्यभङ्गापत्तेश्च । किं च 'शकुनिष्वालेखने' इति सौत्रप्रयोगोऽपि विरुध्यत इति प्रागेवोक्तमित्यास्तां तावत् । लिखापयतीति प्रयोगस्तु मनोरमायामित्थं समर्थितः । अयनम् आयः प्राप्तिः लिखस्यायो लिखायस्तं करोति । **स्फुट** विकसने । स्फुटत्यर्थोऽस्मादिति स्फोटः स च पदस्फोटवाक्यस्फोटादिभेदेनानेकविधः । **कड** मदे । कुटादिकार्याभावेऽपि डान्तानुरोधेनायं कुटादौ पठितः । भ्वादौ पठितस्य पुनरत्र पाठः शतरि नुम्विकल्पार्थः । पूर्वं पाठस्तु उच्छतीत्यादाविव कडतीत्यादौ आद्युदात्तार्थः ॥—**स्फुरतिस्फुलत्योः**—। 'सिवादीनाम्–' इत्यतो वेत्यनुवर्तनादाह—**षत्वं वा स्यादिति** ।—**परिणूतेति** । 'श्र्युकः किति' इतीण्निषेधः ॥—**म्रियतेर्लुङ्लिङोश्च** । चात् शित इति अनुकृष्यते तदाह—**शितश्च प्रकृतिभूतादिति** ॥—**तङिति** । आत्मनेपदमित्यर्थः । तेन म्रियमाण इति सिद्धम् ॥—**स्वरार्थमिति** । मा हि मृतेत्यत्र 'तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तम्' इत्यनेन ङितः परस्य लादेशसार्वधातुकस्यानुदात्तत्वे कृते धातुरुदात्तः । ङित्त्वाभावे तु प्रत्ययस्योदात्तत्वे धातुरनुदात्तः स्यात् । न च सिज्लोपस्यासिद्धत्वात् ङितः परत्वं लसार्वधातुकस्य दुरुपपादमिति तस्य कथमनुदात्तता स्यादिति शङ्क्यम् । ङित्त्वसामर्थ्यात् सिज्लोपस्यासिद्धत्वं नेति सुवचत्वात् । अमृतेत्यत्राडागमस्यैवोदात्तत्वात् मृङो ङित्त्वस्य न किंचित्प्रयोजनमिति अण्निवारणाय मा हि मृतेति माङः प्रयोगे 'तिङ्ङतिङः' इति तिङन्तनिघातेऽपि ङित्त्वं व्यर्थमेव स्याद् इति हिशब्दप्रयोगः । हिप्रयोगे तु 'हि च' इत्यनेन तिङ-

अथ परस्मैपदिनः सप्त ॥ १४०५ रि १४०६ पि गतौ। अन्तरङ्गत्वादियङ्। रियति। पियति। रेता। पेता। १४०७ धि धारणे। १४०८ क्षि निवासगत्योः। १४०९ षू प्रेरणे। सुवति। सविता। १४१० कॄ विक्षेपे। किरति। किरतः। चकार। चकरतुः। करिता। करीता। कीर्यात्। अकारीत्॥

२५३९। किरतौ लवने।६।१।१०४। उपात्किरतेः सुडागमः स्याच्छेदेऽर्थे। उपस्किरति। ॐ अडभ्यासव्यवायेऽपि सुट् कात्पूर्व इति वक्तव्यम्॥ उपास्किरत्। उपचस्कार॥

२५४०। हिंसायां प्रतेश्च।६।१।१४१। उपात्प्रतेश्च किरतेः सुट् स्याद्धिंसायाम्। उपस्किरति। प्रतिस्किरति। १४११ गॄ निगरणे॥

२५४१। अचि विभाषा।८।२।२१। गिरते रेफस्य लत्वं वा स्यादजादौ। गिरति। गिलति। जगार। जगाल। जगरिथ। जगलिथ। गरिता। गरीता। गलिता। गलीता। १४१२ दृङ् आदरे। आद्रियते। आद्रियेते। आदद्रे। आदद्रिषे। आदर्ता। आदरिष्यते। आदृषीष्ट। आदृत। आदृषाताम्। १४१३ धृङ् अवस्थाने। ध्रियते॥

अथ परस्मैपदिनः षोडश॥ १४१४ प्रच्छ ज्ञीप्सायाम्। पृच्छति। पप्रच्छ। पप्रच्छतुः। पप्रच्छिथ। पप्रष्ठ। प्रष्टा। प्रक्ष्यति। अप्राक्षीत्। वृत्। किरादयो वृत्ताः। १४१५ सृज विसर्गे। 'विभाषा सृजिदृशोः २४०४' ससर्जिथ। सस्रष्ठ। स्रष्टा। स्रक्ष्यति। 'सृजिदृशोर्झल्यमकिति २४०५' इत्यमागमः। सृजेत्। सृज्यात्। अस्राक्षीत्। १४१६ टुमस्जो शुद्धौ। मज्जति। ममज्ज। 'मस्जिनशोर्झलि २५१७' इति नुम्॥ ॐ मस्जेरन्त्यात्पूर्वो नुम्वाच्यः॥ संयोगादिलोपः। ममङ्क्थ। ममज्जिथ। मङ्क्ता। मङ्क्ष्यति। अमाङ्क्षीत्। अमाङ्क्ताम्। अमाङ्क्षुः। १४१७ रुजो भङ्गे। रोक्ता। रोक्ष्यति। अरौक्षीत्। अरौक्ताम्। १४१८ भुजो कौटिल्ये। रुजिवत्। १४१९ छुप स्पर्शे। छोप्ता। अच्छौप्सीत्। १४२० रुश १४२१ रिश हिंसायाम्। तालव्यान्तौ। रोष्टा। रोक्ष्यति। रेष्टा। रेक्ष्यति। १४२२ लिश गतौ। अलिक्षत्। १४२३ स्पृश संस्पर्शने। स्प्रष्टा। स्पर्ष्टा। स्प्रक्ष्यति। स्पर्क्ष्यति। अस्प्राक्षीत्। अस्पार्क्षीत्। अस्पृक्षत्। १४२४ विच्छ गतौ। 'गुपूधूप-२३०३' इत्यायः। आर्धधातुके वा। विच्छायति। विच्छायांचकार। विविच्छ। १४२५ विश प्रवेशने। विशति। वेष्टा। १४२६ मृश आमर्शने। आमर्शनं स्पर्शः। अम्राक्षीत्। अमार्क्षीत्। अमृक्षत्। १४२७ णुद प्रेरणे। कर्त्रभिप्रायेऽपि फले परस्मैपदार्थः पुनः पाठः। १४२८ षद्लृ विशरणगत्यवसादनेषु। सीदतीत्यादि भौवादिकवत्। इह पाठो नुम्विकल्पार्थः। सीदति। सीदन्ती। ज्वलादौ पाठस्तु णार्थः। सादः। स्वरार्थश्च। शवनुदात्तः। शस्तूदात्तः। १४२९ शद्लृ शातने। स्वरार्थ एव पुनः पाठः। शता तु नास्ति। 'शदेः शितः-२३६२' इत्यात्मनेपदोक्तेः॥

अथ षट् स्वरितेतः॥ १४३० मिल सङ्गमे। मिल संश्लेषणे इति पठितस्य पुनः पाठः कर्त्रभिप्राये तङर्थः। मिलति। मिलते। मिमेल। मिमिले। १४३१ मुच्लृ मोक्षणे॥

२५४२। शे मुचादीनाम्।७।१।५९। नुम् स्यात्। मुञ्चति। मुञ्चते। मोक्ता। मुच्यात्। मुक्षीष्ट। अमुचत्। अमुक्त। अमुक्षाताम्। १४३२ लुप्लृ छेदने। लुम्पति। लुम्पते। अलुपत्। अलुप्त। १४३३। विद्लृ लाभे। विन्दति। विन्दते। विवेद। विविदे। व्याघ्रभूत्यादिमते सेडयम्। वेदिता। भाष्यादिमतेऽनिट्कः। वेत्ता। परिवेत्ता। परिवेदनं। ज्येष्ठं परित्यज्य दारानग्नींश्च लब्धवानित्यर्थः। तृन्तृचौ। १४३४ लिप उपदेहे। उपदेहो वृद्धिः। लिम्पति। लिम्पते। लेप्ता। 'लिपिसिचि-२४१८'

---

न्तनिघातनिषेधादिष्टस्वरः सिध्यतीति बोध्यम्। रि पि गतौ। परत्वाल्लघूपधगुणः स्यादित्याशङ्कायामाह—अन्तरङ्गत्वादिति।—किरतौ लवने। 'उपात्प्रतियत्न-' इसि सूत्रादुपादिति वर्तते। लवने किम्। उपकिरति॥—हिंसायां प्रतेश्च। चादुपात् 'उरोविदारं प्रतिचस्करे नखैः' इति माघः। कर्मणि लिट्। 'ऋच्छत्यॄताम्' इति गुणः॥—दृङ् आदरे। 'तथाद्रियन्ते न बुधाः सुधामपि' इति श्रीहर्षः। प्रच्छ ज्ञीप्सायाम्। ज्ञातुमिच्छा ज्ञीप्सा। अत्र ज्ञपिर्ज्ञाने। 'आप्ज्ञप्यृधामीत्' 'अत्र लोपः-' इत्यभ्यासलोपः। ण्वुलि। प्रच्छकः। पृच्छाशब्दात् 'तत्करोति-' इति णिजन्ताण्ण्वुलि तु पृच्छकः। पृच्छाशब्दस्तु भिदादेराकृतिगणत्वादङि संप्रसारणे बोध्यः॥—किरादयो वृत्ता इति। एते च 'भूषाकर्मकिरादिसनाम्' इति वक्ष्यमाणयक्चिणादिनिषेधवार्तिके उपयोक्ष्यन्ते। 'किरश्च पञ्चभ्यः' इत्यत्र पञ्चभ्य इत्येतदुत्तरसूत्रेऽनुवृत्त्यर्थमिति बोध्यम्॥—ससर्जिथेति। 'विभाषा सृजिदृशोः' इति थलि वेट्॥—विच्छ गतौ। तुदादिपाठसामर्थ्यादायप्रत्ययान्तादपि शो न तु शप्। तेन विच्छायती विच्छायन्ती इति नुम्विकल्पः। केचित्तु तुदादिपाठसामर्थ्यादायप्रत्ययस्य पाक्षिकत्वं स्वीकृत्य विच्छती विच्छन्ती इति नुम्विकल्पं विच्छति विच्छतः विच्छन्तीत्यादिरूपाणि चोदाजहुस्तेषां तु मते तुदादिपाठस्य केवले चरितार्थत्वादायप्रत्ययान्ताच्छबेव। तेन विच्छायन्ती इति नित्यमेव 'शप्श्यनोः-' इति नुम्॥—पठितस्येति। अस्मिन्नेव गणे परस्मैपदिषु पठितस्येत्यर्थः॥—तङर्थ इति। पूर्वपाठस्तु

---

१ अन्तरङ्गत्वादिति—'नाजानन्तर्ये' इति तु न, समकालप्रवृत्तिकत्वात्।

इत्यङ् । तङि तु वा । अलिपत् । अलिपत । अलिप्त । १४३५ षिच क्षरणे । सिञ्चति । सिञ्चते । असिचत् । असिचत । असिक्त । अभिषिञ्चति । अभ्यषिञ्चत् । अभिषिषेच ॥

अथ त्रयः परस्मैपदिनः ॥ १४३६ कृती छेदने । कृन्तति । चकर्त । कर्तिता । कर्तिष्यति । कर्त्स्यति । अकर्तीत् । १४३७ खिद परिघाते । खिन्दति । चिखेद । खेत्ता । अयं दैन्ये दिवादौ रुधादौ च । १४३८ पिश अवयवे । पिंशति । पेशिता । अयं दीपनायामपि । त्वष्टा रूपाणि पिंशतु । वृत् । मुचादयो वृत्ताः तुदादयश्च ॥ इति तुदादयः ॥

---

## तिङन्ते रुधादयः ४७ ।

१४३९ रुधिर् आवरणे । नव स्वरितेत इरितश्च ॥

२५४३ । रुधादिभ्यः श्नम् ।३।१।७८। शपोऽपवादः । मित्त्वादन्त्यादचः परः । नित्यत्वाद्गुणं बाधते । रुणद्धि । 'श्नसोरल्लोपः २४६९' । णत्वस्यासिद्धत्वादनुस्वारः परसवर्णः । तस्यासिद्धत्वाण्णत्वं न 'न पदान्त–५१' इति सूत्रेणानुस्वारपरसवर्णयोरल्लोपो न स्थानिवत् । रुन्धः । रुन्धन्ति । रुन्धे । रोद्धा । रोत्स्यति । रुणद्धु । रुन्धात् । रुन्धि । रुणधानि । रुणधै । अरुणत् । अरुन्धाम् । अरुणत् । अरुणः । अरुणधम् । अरुधत् । अरौत्सीत् । अरुद्ध । १४४० भिदिर् विदारणे । भिनत्ति । भिन्ते । भेत्ता । भेत्स्यति । भेत्स्यते । अभिनत् । अभिन्ताम् । अभिनदम् । अभिन्त । अभिदत् । अभैत्सीत् । अभित्त । १४४१ छिदिर् द्वैधीकरणे । अच्छिदत् । अच्छैत्सीत् । अच्छित्त । १४४२ रिचिर् विरेचने । रिणक्ति । रिङ्क्ते । रिरेच । रिरिचे । रेक्ता । अरिणक् । अरिचत् । अरैक्षीत् । अरिक्त । १४४३ विचिर् पृथग्भावे । विनक्ति । विङ्क्ते । १४४४ क्षुदिर् संपेषणे । क्षुणत्ति । क्षुन्ते । क्षोत्ता । अक्षुदत् । अक्षौत्सीत् । अक्षुत्त । १४४५ युजिर् योगे । योक्ता । १४४६ उच्छृदिर् दीप्तिदेवनयोः । छृणत्ति । छृन्ते । चच्छर्द । 'सेसिचि–२५०६' इति वेट् । चच्छृदिषे । चच्छृत्से । छर्दिता । छर्दिष्यति । छर्त्स्यति । अच्छृदत् । अच्छर्दीत् । अच्छर्दिष्ट । १४४७ उतृदिर् हिंसानादरयोः । तृणत्तीत्यादि छृणत्तिवत् । १४४८ कृती वेष्टने । परस्मैपदी । कृणत्ति । आर्धधातुके तौदादिकवत् । १४४९ ञि इन्धी । दीप्तौ ॥ त्रय आत्मनेपदिनः ॥

२५४४ । श्नान्नलोपः ।६।४।२३। श्नमः परस्य नस्य लोपः स्यात् । श्नसोरल्लोपः । इन्धे । इन्त्से । इन्धिता । इनधै । ऐन्ध । ऐन्धाः । १४५० खिद दैन्ये खिन्ते । खेत्ता । १४५१ विद विचारणे । विन्ते । वेत्ता ॥

अथ परस्मैपदिनः । १४५२ शिष्लृ विशेषणे । शिनष्टि । शिंष्टः । शिंषन्ति । शिशेषिथ । शेष्टा । शेक्ष्यति । हेर्धिः । जश्त्वम् । ष्टुत्वं । 'झरो झरि–७१' इति वा डलोपः । अनुस्वारपरसवर्णौ । शिण्ढि । शिण्ड्ढि । शिनषाणि । अशिनट् । लृदित्वादङ् । अशिषत् । १४५३ पिष्लृ संचूर्णने । शिपिषत् । पिनष्टि । १४५४ भञ्जो आमर्दने । भनक्ति । बभञ्जिथ । बभङ्क्थ । भङ्क्ता । १४५५ भुज पालनाभ्यवहारयोः । भुनक्ति । भोक्ता । भोक्ष्यति । अभुनक् । १४५६ तृह १४५७ हिसि हिंसायाम् ॥

२५४५ । तृणह इम् ।७।३।९२। तृहः श्नमि कृते इमागमः स्याद्धलादौ पिति । तृणेढि । तृण्ढः । ततर्ह । तर्हिता । अतृणेट् । हिनस्ति । जिहिंस । हिं-

---

संश्लेषणे कर्त्रभिप्रायेऽपि परस्मैपदार्थः ॥—षिच क्षरणे ॥ विचिरिति केचिदिरितं पठन्ति । तत्तु फलाभावादुपेक्ष्यम् । इह 'लिपिसिचिह्वश्च' इति च्लेरङ् विधीयते स चाप्राप्तविधिः इरित्त्वे तु विकल्पेन प्राप्तौ नित्यार्थो विधिरिति फलाभावः ॥—पिंशत्विति । दीपयत्वित्यर्थः ॥ इति तुदादयः ॥

**रुधादिभ्यः श्नम्** ॥ प्रत्ययत्वेऽपि मित्त्वादन्त्यादचः परः । प्रत्ययसंज्ञाफलं तु शस्येतसंज्ञा । शस्योच्चारणं तु 'श्नसोरल्लोपः' 'श्नान्नलोपः' इत्यत्र विशेषणार्थं न तु सार्वधातुकसंज्ञार्थं फलाभावात् । न चापित्सार्वधातुकस्य ङित्त्वे गुणनिषेधः फलमिति शङ्क्यम् । इगन्तस्याङ्गत्वाभावात् ॥—**अरुण इति** । सिपि दश्चेति रुर्वा । एवमभिन इत्यत्रापि । **उच्छृदिर्** । उकारः क्त्वायामिड्विकल्पार्थः । छृत्वा । छर्दित्वा । इट्पक्षे 'न क्त्वा सेट्' इति कित्त्वनिषेधाद् गुणः ॥—**श्नान्नलोपः** । अस्य मुख्योदाहरणम् । अनक्ति । भनक्ति । श्नादित्युत्सृष्टमकारानुबन्धस्य श्नमो ग्रहणमित्याह—**श्नमः परस्येति** । एवं च 'यजयाच–' इति विश्नशब्दस्यापि नुटि विश्नानामित्यत्र लक्षणप्रतिपदोक्तप्रत्ययग्रहणपरिभाषयोः प्रवृत्त्या नलोपशङ्कैव नास्तीत्याहुः । **इन्धे इन्त्से** । श्नमो नकारस्यानुस्वारपरसवर्णौ । 'अनिदिताम्–' इति नलोपस्तु न भवति । अल्लोपस्य 'असिद्धवदत्रा–'इत्यसिद्धत्वात्स्थानिवत्त्वाद्वा । **भञ्जो** । ओदित्करणं निष्ठानत्वार्थम् । भग्नः । **भुज** पालनादौ । 'भुजोऽनवने' इत्यात्मनेपदं वक्ष्यते । भुङ्क्ते । भुञ्जाते ॥—**तृणह इम्** । तृहू इति वक्तव्ये सश्नमो ग्रहणं विशेषविहितेन इमा श्नमो बाधो मा भूदित्येवमर्थम् । न च तौदादिकस्य तृह इत्यस्य व्यावृत्त्यर्थमेवास्त्विति शङ्क्यम् । ततः परस्य हलादेः पितः सार्वधातुकस्य विकरणेन व्यवधानात् । 'नाभ्यस्तस्याचि पिति–' इत्यतः पितीति 'उतो वृद्धिः' इत्यतो हलीति च वर्तते तदाह—**हलादौ पितीति** । 'प्रत्ययलोपे प्रत्ययलक्षणम्' इति सूत्रस्थभाष्यकारीयनिष्कर्षे तु हलीति नानुवर्तते किं तु पितीति अनुवर्तत एव । तेन तृढ इत्यत्र नातिप्रसङ्गः । न च हलीत्यननुवृत्तौ तृणहानीत्यत्रातिप्रसङ्ग इति वाच्यम् । अचि नेत्यनु-

सिता । १४५८ उन्दी क्लेदने । उनत्ति । उन्तः । उन्दन्ति । उन्दाञ्चकार । औनत् । औन्ताम् । औन्दन् । औनः । औनत् । औनदम् । १४५९ अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु । अनक्ति । अङ्क्तः । अञ्जन्ति । आनञ्ज । आनञ्जिथ । आनङ्क्थ । अङ्क्ता । अञ्जिता । अङ्ग्धि । अनजानि । आनक् ॥

२५४६ । अञ्जेः सिचि ।७।२।७१। अञ्जेः सिचो नित्यमिट् स्यात् । आञ्जीत् । १४६० तञ्चू सङ्कोचने । तनक्ति । तङ्क्ता । तञ्चिता । १४६१ ओविजी भयचलनयोः । विनक्ति । विङ्क्तः । 'विज इट् २५३६' इति ङित्त्वम् । विविजिथ । विजिता । अविनक् । अविजीत् । १४६२ वृजी वर्जने । वृणक्ति । वर्जिता । १४६३ पृची संपर्के । पृणक्ति । पपर्च ॥ इति रुधादयः ॥

---

## तिङन्ते तनादयः ४८ ।

अथ सप्त स्वरितेतः ॥ १४६४ तनु विस्तारे । 'तनादिकृञ्भ्य उः २४६६' । तनोति । तन्वः । तनुवः । तनुते । ततान । तेने । तनु । अतनीत् । अतानीत् ॥

२५४७ । तनादिभ्यस्तथासोः ।२।४।७९। तनादेः सिचो वा लुक् स्यात्तथासोः परतः । थासा साहचर्यादेकवचनं तशब्दो गृह्यते । तेनेह न । यूयमतनिष्ट । 'अनुदात्तोपदेश-२४२८' इत्यनुनासिकलोपः । तङि । अतत । अतनिष्ट । अतथाः । अतनिष्ठाः । १४६५ षणु दाने । सनोति । सनुते । 'ये विभाषा २३१९' । सायात् । सन्यात् । 'जनसन-२५०४' इत्यात्वम् । असात । असनिष्ट । असाथाः । असनिष्ठाः । १४६६ क्षणु हिंसायाम् । क्षणोति । क्षणुते । 'ह्म्यन्त-२२९९' इति न वृद्धिः । अक्षणीत् । अक्षत । अक्षणिष्ट । अक्षथाः । अक्षणिष्ठाः । १४६७ क्षिणु च । उप्रत्ययनिमित्तो लघूपधगुणः । (प) संज्ञापूर्वको विधिरनित्यः इति न भवतीत्यात्रेयादयः[1] । भवत्येवेत्यन्ये । क्षिणोति । क्षेणोति । क्षेणितासि । क्षेणितासे । अक्षेणीत् । अक्षित । अक्षेणिष्ट । १४६८ ऋणु गतौ । ऋणोति । अर्णोति । अर्णुतः । अर्ण्वन्ति । आनर्ण । आनृणे । अर्णितासि । आर्णीत् । आर्त । आर्णिष्ट । आर्थाः । आर्णिष्ठाः । १४६९ तृणु अदने । तृणोति । तर्णोति । तृणुते । तर्णुते । १४७० घृणु दीप्तौ । जघर्ण । जघृणे ॥

अथ द्वावनुदात्तेतौ ॥ १४७१ वनु याचने । वनुते । ववने । चान्द्रमते परस्मैपदी । वनोति । ववान । १४७२ मनु अवबोधने । मनुते । मेने । १४७३ डुकृञ् करणे । करोति । 'अत उत्सार्वधातुके २४६७' कुरुतः । यण् । 'न भकुर्छुराम् १६२९' इति न दीर्घः । कुर्वन्ति ॥

२५४८ । नित्यं करोतेः ।६।४।१०८। करोतेः प्रत्ययोकारस्य नित्यं लोपः स्यान्म्वोः परयोः । कुर्वः । कुर्मः । चकर्थ । चकृव । चकृमे । कर्ता । करिष्यति ॥

२५४९ । ये च ।६।४।१०९। कृञ उलोपः स्याद्यादौ प्रत्यये परे । कुर्यात् । आशिषि । क्रियात् । कृषीष्ट । अकार्षीत् । 'तनादिभ्यः-२५४७' इति लुकोऽभावे 'ह्रस्वादङ्गात् २३६९' इति सिचो लोपः । अकृत । अकृथाः ॥

२५५० । संपरिभ्यां करोतौ भूषणे ।६।१।१३७।

२५५१ । समवाये च ।६।१।१३८। संपरिपूर्वस्य करोतेः सुट् स्याद्भूषणे संघाते चार्थे । संस्करोति । अलंकरोतीत्यर्थः । संस्कुर्वन्ति । सङ्घीभवन्तीत्यर्थः । संपूर्वस्य क्वचिदभूषणेऽपि सुट् । 'संस्कृतं भक्षाः १२१७' इति ज्ञापकात् । 'परिनिविभ्यः २२७५' इति षः । परिष्करोति । ❀ सिवादीनां वा- । पर्यष्कार्षीत् । पर्यस्कार्षीत् ॥

२५५२ । उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च ।६।१।१३९। उपात्कृञः सुट् स्यादेष्वर्थेषु चात्प्रागुक्तयोरर्थयोः । प्रतियत्नो गुणाधानम् । विकृतमेव वैकृतं विकारः । वाक्यस्याध्याहार आकाङ्क्षितैकदेशपूरणम् । उपस्कृता कन्या । अलंकृतेत्यर्थः । उपस्कृता ब्राह्मणाः । समुदिता इत्यर्थः । एधो दकस्योपस्कुरुते । गुणाधानं करोतीत्यर्थः । उपस्कृतं भुङ्क्ते । विकृतमित्यर्थः । उपस्कृतं ब्रूते । वाक्याध्याहारेण ब्रूत इत्यर्थः ॥

२५५३ । सुट्कात्पूर्वः ।६।१।१३५। अडभ्यासव्यवायेऽपीत्युक्तम् । संचस्कार । कात्पूर्व इत्यादि भाष्ये प्रत्याख्यातम् । तथाहि । पूर्वं धातुरुपसर्गेण युज्यते । अन्तरङ्गत्वात्सुट् । ततो द्वित्वम् । एवंच 'ऋतश्च संयोगादेर्गुणः २३८९' संचस्करतुः । 'कृसृभृ-२२९३' इति सूत्रे

---

वर्तनात् । उन्दी । क्लेदनमार्द्रीभावः । अञ्जू । व्यक्तिर्विवेचनम् । म्रक्षणं स्निग्धता ॥—**अञ्जेः सिचि । नित्यमिट् स्यादिति** । विभाषाग्रहणं नानुवर्तत इति भावः । सिचि किम् । अङ्क्ता । **पृची** । ईदित्त्वान्निष्ठायां नेट् । पृक्तः । 'अपृक्त एकाल्-' इत्यत्र नञ्पूर्वः ॥ इति रुधादयः ॥

**अतनिष्ट । अतानिष्टेति** । 'तस्थस्थमिपाम्-' इति तादेशः । 'अतो हलादेः-' इति वा वृद्धिः ॥—**अततेति** । 'तनादिभ्यस्तथासोः' इति सिज्लुक्यनुनासिकलोपः ॥—**अतनिष्टेति** । लुगभावपक्षे इट् । **षणु दाने** । नान्तोऽयं णकारस्तु लाक्षणिकः । तेन यङ्लुकि संसन्ति संसन्त इत्यादावनुस्वारपरसवर्णौ । **क्षणु हिंसायाम्** । **क्षिणु च** । इमावपि लाक्षणिकणकारौ । तेन क्षिक्षन्ति । चेक्षन्ति इत्यत्रानुस्वारपरसवर्णौ ॥—**सिचो लोप इति** । न चास्मिन्पक्षे प्रत्ययलक्षणप्र-

---

१ आत्रेयादय इति—अत्रारुचिस्तु संज्ञापूर्वकस्य विधेरनित्यत्वे भाष्यानुक्तत्वम् ।

'ऋतो भारद्वाजस्य २२९६' इति सूत्रे च ॐ क्रञोऽसुट् इति वक्तव्यम् । तेन ससुट्कात्परस्येट् । संचस्करिथ । संचस्करिव । 'गुणोर्ति-२३८०' इति सूत्रे 'नित्यं छन्दसि ३५८७' इति सूत्रान्नित्यमित्यनुवर्तते । नित्यं यः संयोगादिस्तस्येत्यर्थात्सुटि गुणो न । संस्क्रियात् । 'ऋतश्च संयोगादेः-२५२६' इति लिङ्सिचोर्नेट् । 'एकाच उपदेशे-२२७६' इति सूत्रादुपदेश इत्यनुवर्त्य उपदेशे यः संयोगादिरिति व्याख्यानात् । संस्कृषीष्ट । समस्कृत । समस्कृषाताम् ॥ इति तनादयः ॥

---

## तिङन्ते क्र्यादयः ४९ ।

१४७४ । डुक्रीञ् द्रव्यविनिमये ।

२५५४ । क्र्यादिभ्यः श्ना ।३।१।८१। क्रीणाति । 'ई हल्यघोः २४९७' क्रीणीतः । ईत्वात्पूर्वं झेरन्तादेशः । परत्वान्नित्यत्वादन्तरङ्गत्वाच्च । एवं झस्याद्भावः । ततः 'श्नाभ्यस्तयोः-२४८३' इत्याल्लोपः । क्रीणन्ति । क्रीणीते । क्रीणाते । क्रीणते । चिक्राय । चिक्रियतुः चिक्रियिथ । चिक्रेथ । चिक्रियिव । चिक्रियिषे । क्रेता । क्रेष्यति । क्रीतात् । क्रेषीष्ट । अक्रैषीत् । अक्रेष्ट । १४७५ प्रीञ् तर्पणे कान्तौ च । कान्तिः कामना । प्रीणाति । प्रीणीते । १४७६ श्रीञ् पाके । १४७७ मीञ् हिंसायाम् । 'हिनुमीना २५३०' प्रमीणाति । प्रमीणीतः । 'मीनातिमिनोति २५०८' इत्येज्विषये आत्वम् । ममौ । मिम्यतुः । ममिथ । ममाथ । मिम्ये । माता । मास्यति । मीयात् । मासीष्ट । अमासीत् । अमासिष्टाम् । अमास्त । १४७८ षिञ् बन्धने । सिनाति । सिनीते । सिषाय । सिष्ये । सेता । १४७९ स्कुञ् आप्रवणे ॥

२५५५ । स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च ।३।१।८२। चात् श्ना । स्कुनोति । स्कुनुते । स्कुनाति । स्कुनीते । चुस्काव । चुस्कुवे । स्कोता । अस्कौषीत् । अस्कोष्ट । स्तम्भ्वादयश्चत्वारः सौत्राः । सर्वे रोधनार्था इत्येके । माधवस्तु प्रथमतृतीयौ स्तम्भार्थौ द्वितीयो निष्कोषणार्थश्चतुर्थो धारणार्थ इत्याह । सर्वे परस्मैपदिनः । नलोपः । विष्टभ्नोति । विष्टभ्नाति । अवष्टभ्नोति । अवष्टभ्नाति । अवतष्टम्भ । 'जृस्तम्भु-२२९१' इत्यङ् । व्यष्टभत् । व्यष्टम्भीत् । स्तुभ्नोति । स्तुभ्नाति ॥

२५५६ । वेः स्कभ्नातेर्नित्यम् ।८।३।७७। वेः परस्य स्कभ्नातेः सस्य षः स्यात् । विष्कभ्नोति । विष्कभ्नाति । स्कुभ्नोति । स्कुभ्नाति ॥

२५५७ । हलः श्नः शानज्झौ ।३।१।८३। हलः परस्य श्नः शानजादेशः स्याद्धौ परे । स्तभान । स्तुभान । स्कभान । स्कुभान । पक्षे स्तभ्नुहीत्यादि । १४८० युञ् बन्धने । युनाति । युनीते । योता । १४८१ क्नूञ् शब्दे । क्नूनाति । क्नूनीते । क्नविता । १४८२ द्रूञ् हिंसायाम् । द्रूणाति । द्रूणीते । १४८३ पूञ् पवने ।

२५५८ । प्वादीनां ह्रस्वः ।७।३।८०। शिति परे । पुनाति । पुनीते । पविता । १४८४ लूञ् छेदने । लुनाति । लुनीते । १४८५ स्तॄञ् आच्छादने । स्तृणाति । स्तृणीते । तस्तार । तस्तरतुः । स्तरिता । स्तरीता । स्तृणीयात् । स्तृणीत । आशिषि । स्तीर्यात् । 'लिङ्सिचोः २५२८' इति वेट् 'न लिङि २५२९' वृत इटो लिङि दीर्घो न स्यात् । स्तरिषीष्ट । 'उश्च २३६८' इति किरवम् । स्तीर्षीष्ट । 'सिचि च परस्मैपदेषु २३९२' इति न दीर्घः । अस्तारीत् । अस्तारिष्टाम् । अस्तरिष्ट । अस्तरीष्ट । अस्तीर्ष्ट । १४८६ कॄञ् हिंसायाम् । कृणाति । कृणीते । चकार । चकरे । १४८७ वृञ् वरणे । वृणाति । वृणीते । ववार । ववरे । वरिता । वरीता । आशिषि 'उदोष्ठ्यपूर्वस्य २४९४' वूर्यात् । वरिषीष्ट । वूर्षीष्ट । अवारीत् । अवारिष्टाम् । अवरिष्ट । अवरीष्ट । अवूर्ष्ट । १४८८ धूञ् कम्पने । धुनाति । धुनीते । दुधविथ । दुधोथ । दुधुविव । धोता । धविता । 'स्तुसुधूञ्भ्यः-२३८५' इतीट् । अधावीत् । अधविष्ट । अधोष्ट ॥

अथ वध्नात्यन्ताः परस्मैपदिनः । १४८९ शॄ हिंसायाम् । 'शॄदॄप्रां ह्रस्वो वा २४९५' इति ह्रस्वपक्षे यण् । अन्यदा 'ऋच्छत्यृताम् २३८३' इति गुणः । श-

---

वृत्त्या अकृतेत्यत्र गुणः स्यादिति वाच्यम् । 'उश्च' इति सिचः कित्त्वेन तन्निषेधात् ॥ 'संपर्युपेभ्यः-' इति वृत्तिस्थपाठं विहाय भाष्यवार्तिकानुसारेणाह—**संपरिभ्यामिति** ॥ इति तनादयः ॥

**एवं झस्याद्भाव इति** । 'आत्मनेपदेष्वनतः' इत्यनेन ॥—**सौत्रा इति** । नकारोपधा इत्यपि ज्ञेयाः ॥—**विष्टभ्नोतीति** । 'अनिदिताम्-' इति नलोपः । 'स्तन्भेः' इति षत्वम् ॥—**वेः स्कभ्नातेर्नित्यम्** । 'सिवादीनां वा' इत्यतो वेति नानुवर्तते इति ध्वननार्थमिह नित्यग्रहणम् ॥—**विस्कभ्नोतीति** । स्कभ्नातेरित्यत्र श्नाविशिष्टं रूपं न विवक्षितं किं तु धातुमात्रम् । अन्यथा विष्कम्भिता विष्कम्भितसित्यादावपि षत्वं न स्यात् । न चेष्टापत्तिः, माधवादिग्रन्थविरोधादिति भावः ॥—**हलः श्नः**—॥—**स्तभानेति** । 'अतो हेः' इत्यारम्भसामर्थ्यात्संनिपातपरिभाषाया अप्रवृत्तेर्हेर्लुक् । अत एव जहीत्यत्र हिलोपवारणायेयं परिभाषा नोपन्यस्तेत्याहुः । यत्तु कैश्चित् शानजादेशो धातुपाठपठितेभ्यः परस्य श्नो भवति न तु सौत्रेभ्य इति व्याख्याय स्तभ्नीहीत्युदाहृतं तन्निष्प्रमाणं माधवादिग्रन्थविरुद्धं च ॥—**प्वादीनां ह्रस्वः** । 'ष्ठिवुक्लमुचमाम्-' इत्यतः शितीत्यनुवर्तत इत्याह—**शिति पर इति** ॥—**न लिङीति** । अनेन वृत इटो लिङि दीर्घो नेति सारितम् ॥—**उदोष्ठ्य**—। दन्तोष्ठ्योऽपि ओष्ठ्यग्रहणेन गृह्यत इत्याह—**वूर्यादिति** ॥—**वरिषीष्टेति** । 'लिङ्सिचोरात्मनेपदेषु'

श्रतुः । शशरतुः 'श्र्युकः किति २३८१' इति निषेधस्य क्रादिनियमेन बाधः । शशरिव । शश्रिव । शरिता । शरीता । शृणीहि । शीर्यात् । अशारिष्टाम् । १४९० पॄ पालनपूरणयोः । पप्रतुः । पपरतुः । आशिषि । पूर्यात् । १४९१ वॄ वरणे । भरण इत्येके । १४९२ भॄ भर्त्सने । भरणेप्येके । १४९३ मॄ हिंसायाम् । मृणाति । ममार । १४९४ दॄ विदारणे । ददरतुः । दद्रतुः । १४९५ जॄ वयोहानौ । झॄ इत्येके । धॄ इत्यन्ये । १४९६ नॄ नये । १४९७ कॄ हिंसायाम् । १४९८ ॠ गतौ । ऋणाति । अरांचकार । अरिता । अरीता । आर्णात् । आर्णीताम् । ईर्यात् । आरीत् । आरिष्टाम् । १४९९ गॄ शब्दे १५०० ज्या वयोहानौ । 'ग्रहिज्या २४१२' ॥

२५५९ । हलः ।६।४।२। अङ्गावयवाद्धलः परं यत्सं-प्रसारणं तदन्ताङ्गस्य दीर्घः स्यात् । इति दीर्घे कृते 'प्वादीनां ह्रस्वः २५५८' । जिनाति । जिज्यौ । जिज्यतुः । १५०१ री गतिरेषणयोः । रेषणं वृकशब्दः । १५०२ ली श्लेषणे । 'विभाषा लीयतेः २५०९' इत्येज्विषये आत्वं वा । ललौ । लिलाय । लाता । लेता । १५०३ व्ली वरणे । व्लिनाति । १५०४ प्ली गतौ । वृत् । ल्वादयो वृत्ताः । प्वादयोऽपीत्येके । १५०५ व्री वरणे । १५०६ भ्री भये । भरण इत्येके । १५०७ क्षीष् हिंसायाम् । एषां त्रयाणां ह्रस्वः । केषांचिन्मते तु न । १५०८ ज्ञा अवबोधने । 'ज्ञाजनोर्जा २५११' जानाति । दीर्घनिर्देशसामर्थ्यान्न ह्रस्वः । १५०९ बन्ध बन्धने । बध्नाति । बबन्धिथ । बन्धा । बन्धारौ । भन्त्स्यति । बधान । अभान्सीत् । 'पूर्वत्रासिद्धम् १२' इति भष्भावात्पूर्वं 'झलो झलि २२८१' इति सिज्लोपः । प्रत्ययलक्षणेन सादिप्रत्ययमाश्रित्य भष्भावो न । प्रत्ययलक्षणं प्रति सिज्लोपस्यासिद्धत्वात् । अबान्धाम् । अभान्त्सुः । १५१० वृङ् संभक्तौ । वृणीते । वव्रे । वव्रृषे वव्रृढ्वे । वरिता । वरीता । अवरिष्ट । अवरीष्ट । अवृत । १५११ श्रन्थ विमोचनप्रतिहर्षयोः ॥ इतः परस्मैपदिनः । श्रथ्नाति । ॐ श्रन्थिग्रन्थीत्यादिना कित्त्वपक्षे एत्वाभ्यास-लोपावप्यत्र वक्तव्यौ इति हरदत्तादयः । श्रेथतुः । श्रेथुः । इदं कित्त्वं पितामपीति सुधाकरमते । श्रेथिथ । अशि-श्रन्थपि पक्षे णलि । शश्राथ । उत्तमे तु । शश्राथ शश्रथेति माधवः । तत्र मूलं मृग्यम् । १५१२ मन्थ विलोडने । १५१३ श्रन्थ १५१४ ग्रन्थ सन्दर्भे । अर्थभेदाच्छ्रन्थेः पुनः पाठः । रूपं तूक्तम् । १५१५ कुन्थ संक्लेशने । संक्लेशे इत्येके । कुथ्नाति । चुकुन्थ । कुथेति दुर्गः । चुकोथ । १५१६ मृद क्षोदे । मृद्नाति । मृदान १५१७ मृड च । अयं सुखेऽपि । हृत्वम् । मृड्णाति । १५१८ गुध रोषे । गुध्नाति । १५१९ कुष निष्कर्षे । कुष्णाति । कोषिता ॥

२५६० । निरः कुषः ।७।२।४६। निरः परात्कुषो वलादेरार्धधातुकस्य इड्वा स्यात् । निष्कोषिता । नि-ष्कोष्टा । निरकोषीत् । निरकुक्षत् । १५२० क्षुभ संच-लने । 'क्षुभ्नादिषु च ७९२' क्षुभ्नाति । क्षुभ्नीतः । क्षो-भिता । क्षुभान । १५२१ णभ १५२२ तुभ हिंसायाम् । नभ्नाति । तुभ्नाति । नभते तोभते इति शपि । नभ्यति तुभ्यतीति श्यनि । १५२३ क्लिशू विबाधने । शादिति श्चुत्वनिषेधः । क्लिश्नाति । क्लेशिता । क्लेष्टा । अक्लेशीत् । अक्लिक्षत् । १५२४ अश भोजने । अश्नाति । आश । १५२५ उध्रस उञ्छे । उकार इत् । ध्रस्नाति । उकारो धात्ववयव इत्येके । उध्रसांचकार । १५२६ इष आ-भीक्ष्ण्ये । पौनःपुन्यं भृशार्थो वा आभीक्ष्ण्यम् । इष्णाति ।

इति वेट् ॥—**अवृषेति** । 'उश्च' इति लिङ्सिचोः कित्त्वाद् गुणाभावे सत्युक्तम् ॥—**हलः** । संप्रसारणस्येत्यनुवर्तते । अङ्गस्येत्यवयवषष्ठी । हल इति पञ्चमी तदेतदाह—**अङ्गावयवादिति** । अङ्गावयवात्किम् । निरुतम् । दुरुतम् । तदन्ता-ङ्गस्य किम् । विध्यति । **क्षीष्** हिंसायाम् । षित्त्वादङ् । क्षिया हेतिक्षियायाम् । क्षियाशीरित्यादौ क्षिया धर्मव्यतिक्रम आचारभेद इति वक्ष्यति ॥—**दीर्घनिर्देशसामर्थ्यादिति** । ननु दीर्घग्रहणेनाङ्गवृत्तपरिभाषा ज्ञाप्यत इत्याकरे स्थि-तम् । अन्यथा ज्ञाजनोर्ज विदध्यात् । 'अतो दीर्घो यञि' इति दीर्घसिद्धेः । तथा च दीर्घनिर्देशसामर्थ्यस्योपक्षयात्कथमिह ह्रस्वाभावसिद्धिरिति चेत् । अत्राहुः । ह्रस्वाभावे सत्येव दीर्घनिर्देश उक्तपरिभाषायां ज्ञापकः । सति तु ह्रस्वे पुनरङ्गकार्यं प्रवृत्तमेवेति न ज्ञापकः तथा च ह्रस्वाभावसिद्धौ न किंचिद्बाधकमिति । किंच 'अङ्गवृत्ते पुनरङ्गवृत्तावविधिः' इत्येव परि-भाषाशरीरम् । तच्चोक्तज्ञापकात्सिद्धम् । यदि तु 'भ्यसो भ्यम्' इति सूत्रे भाष्ये परिनिष्ठितस्येत्येव पाठस्तर्हि स्वतन्त्रमेवेदं वचनं न तु ज्ञापकसिद्धमिति पक्षोऽपि युष्मदस्मच्छब्दगतमनोरमाग्रन्थादवगम्यते । तस्मिंस्तु पक्षे दीर्घग्रहणसामर्थ्यं नोपक्षीणमिति सम्यगेवायं ग्रन्थ इति । केचित्तु संज्ञापूर्वकविधेरनित्यत्वान्न ह्रस्व इति व्याख्येयमित्याहुः ॥—**बध्नातीति** । 'अनिदिताम्–' इति नलोपः ॥—**अभान्सीदिति** । 'वदव्रज–' इति वृद्धिः । भष्भावः ॥—**अबान्धामिति** । 'झष-स्तथोः–' इति तस्य धत्वम् । 'झरो झरि' इति वा लोपः । **वृङ्** संभक्तौ । भक्तिर्भजनम् । **श्रन्थ** ॥—**कित्त्वपक्षे इति** । श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्त्वं वेति व्याकरणान्तरमित्युक्तत्वात् ॥—**निरः कुषः** । 'स्वरति–' इति सूत्राद्वेत्यनु-वर्तते 'आर्धधातुकस्येट्–' इत्यधिक्रियत एव तदाह—**वलादेरित्यादि** । निरः किम् । कोषिता । कोषितुम् ॥—**निरकु-**

१ **निर्देशसामर्थ्यादिति**—एतेन अङ्गवृत्तपरिभाषा निष्फलेति सूचयति इति शेखरकारः ।

'तीषसह-२३४०' इत्यत्र सहिना साहचर्यादकारविकरणस्य तौदादिकस्यैव इषेर्ग्रहणं नतु इष्यतीष्णात्योरित्याहुः । एषिता । वस्तुतस्तु इष्णातेरपि इड्विकल्प उचितः । तथा च वार्तिकम् । * इषेस्तकारे श्यन्प्रत्ययात्प्रतिषेध इति । १५२७ विष विप्रयोगे । विष्णाति । वेष्टा । १५२८ प्रुष १५२९ प्लुष स्नेहनसेवनपूरणेषु । प्रुष्णाति । प्लुष्णाति । १५३० पुष पुष्टौ । पोषिता । १५३१ मुष स्तेये । मोषिता । १५३२ खच भूतप्रादुर्भावे । भूतप्रादुर्भावोऽतिक्रान्तोत्पत्तिः । खच्ञाति । वान्तोऽयमित्येके ॥

२५६१ । च्छ्वोः शूडनुनासिके च ।६।४।१९। सतुक्कस्य छस्य वस्य च क्रमाच्छ ऊठ् एतावादेशौ स्तोऽनुनासिके क्वौ झलादौ च क्ङिति । खौनाति । चखाव खविता । शानचः परत्वादूठि कृते हलन्तत्वाभावान्न शानच् । खौनीहि १५३३ हिठ च । ष्टुत्वम् । हिठ्णाति । १५३४ ग्रह उपादाने । स्वरितेत् । 'ग्रहिज्या-२४१२' । गृह्णाति । गृह्णीते ॥

२५६२ । ग्रहोऽलिटि दीर्घः ।७।२।३७। एकाचो ग्रहेर्विहितस्येटो दीर्घः स्यान्नतु लिटि । ग्रहीता । लिटि तु जग्रहिथ । गृह्यात् । ग्रहीषीष्ट । 'ह्यन्त-२२९९' इति न वृद्धिः । अग्रहीत् । अग्रहीष्टाम् । अग्रहीष्ट । अग्रहीषाताम् अग्रहीषत । इति क्र्यादयः ॥

## तिङन्ते चुरादयः ५० ।

१५३५ चुर स्तेये ॥

२५६३ । सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् ।३।१।२५। एभ्यो णिच् स्यात् । चूर्णान्तेभ्यः (ग) प्रातिपदिकाद्धात्वर्थे इत्येव सिद्धे तेषामिह ग्रहणं प्रपञ्चार्थम् । चुरादिभ्यस्तु स्वार्थे । 'पुगन्त-२१८९' इति गुणः । 'सनाद्यन्ताः-२३०४' इति धातुत्वम् । तिप्शबादि । गुणायादेशौ । चोरयति ॥

२५६४ । णिचश्च ।१।३।७४। णिजन्तादात्मनेपदं स्यात्कर्तृगामिनि क्रियाफले । चोरयते । चोरयामास । चोरयिता । चोर्यात् । चोरयिषीष्ट । 'णिश्रि-२३१२' इति चङ् । 'णौ चङि-२३१४' इति ह्रस्वः । द्वित्वम् । 'हलादिः शेषः २१७९' । 'दीर्घो लघोः २३१८' इत्यभ्यासदीर्घः । अचूचुरत् । अचूचुरत । १५३६ चिति स्मृत्याम् । चिन्तयति । अचिचिन्तत् । चिन्तेति । पठितव्ये इदित्करणं णिचः पाक्षिकत्वे लिङ्गम् । तेन चिन्त्यात् । चिन्त्यते इत्यादौ नलोपो न । चिन्तति । चिन्तेत् । एतच्च ज्ञापकं सामान्यापेक्षमित्येके । 'अत एकहल-२२६०' इत्यत्र वृत्तिकृता जगाण जगणतुरित्युदाहृतत्वात् विशेषापेक्षमित्यपरे । अत एव (ग) आधृषाद्वा इत्यस्य न वैयर्थ्यम् । १५३७ यत्रि संकोचे । यन्त्रयति ।

---

*दिति । इडभावे क्सः ॥—**सहिना साहचर्यादिति** । यद्यपि षह षुह चक्यर्थे इति दिवादिरपि सहिरस्ति तथापि सहेति शपा निर्देशाद् भौवादिकेनैव सहिना साहचर्यमित्याहुः ॥—**श्यन्प्रत्ययादिति** । बहुव्रीहिरयम् । श्यन्प्रत्ययवत इषेस्तकारे परत इड्विकल्पप्रतिषेध इति वार्तिकार्थः । तथा च दैवादिकाद्विकल्पो नेति फलितम् । एवं च 'तीषसह-' इत्यत्र इष्णातेरपि ग्रहणमिति बोध्यम् ॥—**पोषितेति** । अनिट्केषु पुष्येति श्यना निर्देशादयं सेडिति भावः ॥—**च्छ्वोः शूडनु—**॥ च्छ्वोरिति सतुक्कस्यानुकरणम् । चुत्वेन तकारस्थाने चकार इत्याह—**सतुक्कस्येति** । एवं च सूत्रे छकारात्पूर्वं चकारो ज्ञेयः । सतुक्कस्य किम् । विच्छप्रच्छाभ्यां नङ्प्रत्यये छकारस्य शकारे कृते तुकोऽश्रवणं यथा स्यात् । अकृतव्यूहपरिभाषा त्वनित्या अस्मादेव सतुक्कग्रहणात् । तेनातिक्रान्तो भवकन्तमतिभवकानित्यादि सिद्धमित्याहुः । सूत्रस्थेन चशब्देन क्विझलोः क्ङितीत्यनुकृष्यत इत्याह—**क्वावित्यादि** । ग्रहो लिटि दीर्घः ॥ एकाचः किम् । जाग्रहिता । जाग्रहिष्यति । इत्यादौ यङ्लुकि माभूत् । विहितस्येति किम् । ग्राहितम् । न चात्र णिलोपस्य स्थानिवद्भावाद्ग्रहेः परत्वं नेति वाच्यम् । दीर्घविधौ स्थानिवत्त्वनिषेधात् । त्रैपादिकदीर्घविधावेव स्थानिवत्त्वनिषेध इत्यभ्युपगमे तु विहितविशेषणं व्यर्थमेवेत्याहुः । प्रकृतस्येटो ग्रहणात् ग्राहिता ग्राहिष्यत इत्यादौ चिण्वदिटो न दीर्घः ॥—**ग्रहीषीष्टेति** । वृत इत्यनुवृत्तेः 'न लिङि' इति दीर्घनिषेधो न प्रवर्तते ॥—**अग्रहीषातामिति** । लुङात्मनेपदद्विवचनम् ॥ इति क्र्यादयः ॥

**सत्यापपाश—**॥ एतस्योदाहरणानि अग्रे नामधातुषु स्फुटीभविष्यन्तीति नास्माभिरुपपाद्यन्ते । त्वचशब्दोऽकारान्तः ॥—**प्रपञ्चार्थमिति** । सत्यापग्रहणं तु आपुगर्थमिति ज्ञेयम् । अन्ये त्वाहुः । सापेक्षेभ्योऽपि णिजर्थमेषामुपादानम् । अन्यथा रमणीयं घटं करोतीत्यादाविव रमणीयं रूपयतीत्यादावपि णिज् न स्यादिति ॥—**अचूचुरदिति** । अत्र प्राचा व्याख्यात्रा 'सन्वल्लघुनि-' इति सन्वद्भाव इत्युक्तं तद्भ्रमसात् । सन्वद्भावविषये हि जायमानो दीर्घः सन्वद्भावं नापेक्षत इति ॥—**सामान्यापेक्षमिति** । सर्वेऽपि चुरादयो विकल्पेन णिचं लभन्त इत्येतदर्थकमित्यर्थः । न चैवम् 'आधृषाद्वा' इति व्यर्थमिति वाच्यम् । ज्ञापकसिद्धस्यासार्वत्रिकत्वात् । एवं चास्मिन्पक्षे आधृषीयाणामेवैच्छिको विकल्पः, अन्येषां तु शिष्टप्रयोगाद्व्यवस्थित इत्यर्थः ॥—**जगाण । जगणतुरिति** । वृत्तौ चकाण चकणतुरिति प्रचुरः पाठस्त-

---

१ एकाच इति—हरदत्तानुरोधेनेदमुक्तम् । अग्रहीष्टामित्यादौ लावस्थायामडिति पक्षे एकाचो विहितत्वाभावाद्दीर्घाप्राप्त्या असंगतं हरदत्तोक्तमिति बोध्यम् । २ स्वार्थे इति—करणे इत्यस्य तु नानुवृत्तिः, विच्छिन्नत्वादिति भावः ।

यत्रेति पठितुं शक्यम्। यत्तु इदित्करणाद्यन्त्रतीति माधवेनोक्तं तच्चिन्त्यम्। एवं कुद्रितत्रिमन्त्रिषु। १५३८ स्फुडि परिहासे। स्फुण्डयति। इदित्करणात्। स्फुण्डति। स्फुटीति पाठान्तरम्। स्फुण्टयति। १५३९ लक्ष दर्शनाङ्कनयोः। १५४० कुद्रि अनृतभाषणे। कुन्द्रयति। १५४१ लड उपसेवायाम्। लाडयति। १५४२ मिदि स्नेहने। मिन्दयति। मिन्दति। १५४३ ओलडि उत्क्षेपणे। ओलण्डयति। ओलण्डति। ओकार इदित्येके। लण्डयति। लण्डति। उकारादिरयमित्यन्ये। उलण्डयति। १५४४ जल अपवारणे। लज इत्येके। १५४५ पीड अवगाहने। पीडयति॥

२५६५। भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम्।७।४।३। एषामुपधाया ह्रस्वो वा स्याचङ्परे णौ। अपीपिडत्। अपिपीडत्। १५४६ नट अवस्कन्दने। अवस्कन्दनं नाट्यम्। १५४७ श्रथ प्रयत्ने। प्रस्थान इत्येके। १५४८ बध संयमने। बाधयति। बन्धेति चान्द्राः। १५४९ पॄ पूरणे। पारयति। दीर्घोच्चारणं णिचः पाक्षिकत्वे लिङ्गम्। तद्धि सेट्कत्वाय। एवं च पृणातिपिपर्तिभ्यां परितेत्यादिसिद्धावपि परति परत इत्यादिसिद्धिः फलम्। १५५० ऊर्ज बलप्राणनयोः। १५५१ पक्ष परिग्रहे। १५५२ वर्ण १५५३ चूर्ण प्रेरणे। (ग) वर्ण वर्णन इत्येके। १५५४ प्रथ प्रख्याने। प्राथयति। नान्ये मितोऽहेताविति वक्ष्यमाणत्वान्नास्य मित्त्वम्॥

२५६६। अत्स्मृदृत्वरप्रथम्रदस्तॄस्पशाम्।७।४।९५। एषामभ्यासस्य अकारोऽन्तादेशः स्याचङ्परे णौ। इत्त्वापवादः। अपप्रथत्। १५५५ पृथ प्रक्षेपे। पर्थयति॥

२५६७। उर्ऋत्।७।४।७। उपधाया ऋवर्णस्य स्थाने ऋत्स्याद्वा चङ्परे णौ। इररारामपवादः। अपीपृथत्। अपपर्थत्। पथ इत्येके। पाथयति। १५५६ षम्ब सम्बन्धने। सम्बयति। अससम्बत्। १५५७ शम्ब च। अशशम्बत्। साम्ब इत्येके। १५५८ भक्ष अदने। १५५९ कुट्ट छेदनभर्त्सनयोः। पूरण इत्येके। कुट्टयति। १५६० पुट्ट १५६१ चुट्ट अल्पीभावे। १५६२ अट्ट १५६३ षुट्ट अनादरे। अट्टयति। अयं दोपधः। ष्टुत्वस्यासिद्धत्वात् 'नन्द्राः-२२४६' इति निषेधः। आट्टिटत्। १५६४ लुण्ठ स्तेये। लुण्ठयति। लुण्ठतीति लुठि स्तेये

सिंस्तु पाठे नास्त्येव प्रकृतार्थसिद्धिः। केचित्तु णिजभावे गणयामासेत्यादिरूपाभावेऽपि गणधातोरदन्तत्वाद्गणामासेत्यामा भवितव्यमिति जगाणेत्यादिपाठश्चिन्त्य इत्याहुः॥—**न वैयर्थ्यमिति**। वैयर्थ्यशङ्कापि नेत्ययमेव पक्षो युक्त इति भावः। न च पूर्वोक्तपक्षस्य शिथिलत्वे जगाण जगणतुरिति वृत्तिप्रयोगः कथं संगच्छतामिति शङ्क्यम्। भ्वादेराकृतिगणत्वात् तत्रत्यधातोस्तद्रूपसिद्धेः॥—**तच्चिन्त्यमिति**। यन्त्रितत्रिमन्त्र्यादिषु इकारो व्यर्थ एव न तु ज्ञापनार्थः। तेषां संयोगान्तत्वात् यन्त्रतन्त्रमन्त्र इति नकारे पठितेऽपि 'अनिदिताम्-' इति लोपो न लभ्यते नकारस्यानुपधात्वात्। चिन्त्यादित्यत्र तु चिन्त स्मृत्यामिति नकारोपधपाठे नलोपः स्यादेवेति तद्वारणाय क्रियमाण इकारस्तु ज्ञापक इति भावः। **लड**। स्नेहपूर्विका सेवोपसेवा। लाडयति पुत्रम्। लडयोरभेदाल्लालयति॥—**ओकार इदित्येक इति**। ओदित्करणं 'ओदितश्च' इति धातोरव्यवहितस्य निष्ठातकारस्य नत्वार्थमिति तद्बलान्नेडित्येके। लण्णः। ओदिद्बलादिड्व्यवधानेऽपि नत्वमित्यन्ये। लण्डिनः। **पीड** अवगाहने।—'भ्राजभास-' इति ह्रस्वपक्षे सन्वद्भावविषयत्वात् 'दीर्घो लघोः' इत्यभ्यासस्य दीर्घः। ह्रस्वाभावपक्षे तु न दीर्घ इत्याह—**अपीपिडदित्यादि**॥ पॄ पूरणे॥—**दीर्घोच्चारणमित्यादि**[1]। पारयतीत्यादिरूपाणि ह्रस्वोच्चारणेऽपि सिध्यन्तीति परतीत्याद्यर्थं दीर्घोच्चारणमित्यर्थः। अत्र वदन्ति। धातुपाठकृता पाणिनिना विशिष्यैव उदात्ता अनुदात्ताश्च पठिताः। न हि ऋकारान्ताः सेट्का इति। तेन परिभाषितं येनेत्थं तस्याशयः कल्प्येत। कविकल्पद्रुमे त्वस्य नित्यण्यन्तत्वमुक्तमिति। एवं चास्मिन्पक्षे दीर्घोच्चारणं व्यर्थमिति फलितम्। अन्ये तु दीर्घोच्चारणं परिता परीतेत्यादौ 'वृतो वा' इति इटो दीर्घविकल्पार्थम्। ततश्च णिज्विकल्पः सिद्ध एवेति परतीत्यादिरूपमाहुः। **ऊर्ज**। ऊर्जयति बलवान्भवति। जीवति वेत्यर्थः॥—**उर्ऋत्**। 'जिघ्रतेर्वा' इत्यतो वेति वर्तते॥—**इररारामिति**। ऋकारोपधे 'उपधायाश्च' इत्यचीकृतदित्यादौ इर् प्राप्तः, अमीमृजदित्यत्र मृजेर्वृद्धिरार् प्राप्तः, इतरेषां ऋदुपधानां गुणेन अपीपृथदित्यादावर् इति विवेकः। नन्विह उरित्यनूद्यमानः सवर्णान् गृह्णाति, ऋदिति विधीयमानस्तु न गृह्णाति। तथा च अचीक्लृपदित्यत्र 'उर्ऋत्' इत्यनेन ऋवर्णे सति अचीकृपदिति प्रसज्येतेति चेत्। मैवम्। लत्वस्यासिद्धत्वेन प्रथमम् 'उर्ऋत्' इत्यस्य प्रवृत्तौ पश्चात् 'कृपो रो लः' इत्यनेन ऋकारैकदेशस्य लृकारैकदेशविधानादिष्टसिद्धेः। न च चलीक्लृप्यत इत्यादौ रीगागमादेर्लत्वार्थं 'कृपो रो लः' इत्यस्यावश्यकत्वेऽपि कृपूधातुः 'कृपू सामर्थ्ये' इत्येव पठ्यताम्। एवं हि प्रक्रियालाघवं लभ्यते। ऋकारैकदेशस्य लृकारैकदेश इति व्याख्यानक्लेशोऽपि न भवतीति वाच्यम्। अचीक्लृपदित्यत्र 'उर्ऋत्' इत्यस्य प्रवृत्तावनिष्टरूपप्रसङ्गात्। 'कृपो रो लः' इत्यनेन ऋकारैकदेशस्य लृकारैकदेश इत्यभ्युपगमे तु उक्तव्याख्यानक्लेशध्रौव्यात्। इदं च कैयटरीत्योक्तम्। नन्विदं क्षोदक्षमम् 'ऋत उत्' इत्यनेन तपरकरणेन लृवर्णग्राहकत्वे रूपसिद्धेः सत्त्वात्॥—अयं

१ दीर्घोच्चारणमित्यादि—वस्तुतस्तु इदमपि ज्ञापकं चिन्त्यमेव, दीर्घपाठस्य संदिग्धत्वादिति केचित्।

इति भौवादिकस्य । १५६५ शठ १५६६ श्वठ असंस्कारगत्योः । श्वठि इत्येके । १५६७ तुजि १५६८ पिजि हिंसाबलादाननिकेतनेषु । तुञ्जयति । पिञ्जयति । इदित्करणात्तुञ्जति । पिञ्जति । तुज पिजेति केचित् । लजि लुजि इत्येके । १५६९ पिस गतौ । पेसयति । पेसतीति तु शपि गतम् । १५७० षान्त्व सामप्रयोगे । १५७१ श्वल्क १५७२ वल्क परिभाषणे । १५७३ ष्णिह स्नेहने । स्फिट इत्येके । १५७४ स्मिट अनादरे । अपोपदेशत्वान्न षः । असिस्मिटत् । ष्मिङ् अनादर इत्येके । ङित्त्वस्यावयवेऽचरितार्थत्वाण्णिजन्तात्तङ् । स्माययते । १५७५ श्लिष श्लेषणे । १५७६ पथि गतौ । पन्थयति । पन्थति । १५७७ पिच्छ कुट्टने । १५७८ छदि संवरणे । छन्दयति । छन्दति । १५७९ श्रण दाने । प्रायेणायं विपूर्वः । विश्राणयति । १५८० तड आघाते । ताडयति । १५८१ खड १५८२ खडि १५८३ कडि भेदने । खाडयति । खण्डयति । खण्डति । कण्डयति । कण्डति । १५८४ कुडि रक्षणे । १५८५ गुडि वेष्टने । रक्षण इत्येके । कुठि इत्यन्ये । अवकुण्ठयति अवकुण्ठति । गुठि इत्यपरे । १५८६ खुडि खण्डने । १५८७ वठि विभाजने । वडि इत्येके । १५८८ मडि भूषायां हर्षे च । १५८९ भडि कल्याणे । १५९० छर्द वमने । १५९१ पुस्त १५९२ बुस्त आदरानादरयोः । १५९३ चुद संचोदने । १५९४ नक्क १५९५ धक्क नाशने । णोपदेशलक्षणे पर्युदस्तोऽयम् । प्रनक्कयति । १५९६ चक्क १५९७ चुक्क व्यथने । १५९८ क्षल शौचकर्मणि । १५९९ तल प्रतिष्ठायाम् । १६०० तुल उन्माने । तोलयति । तोलयामास । अतूतुलत् । कथं तुलयति तुलना इत्यादि । 'अतुलोपमाभ्याम्–६३०' इति निपातनाददन्तस्य तुलाशब्दस्य सिद्धौ ततो णिच् । १६०१ दुल उत्क्षेपणे । दोलयति । दोलयामास । अदूदुलत् । १६०२ पुल महत्त्वे । १६०३ चुल समुच्छ्राये । १६०४ मूल रोहणे । मूलयति मूलयामास । १६०५ कल १६०६ विल क्षेपे । कालयति । १६०७ बिल भेदने । १६०८ तिल स्नेहने । १६०९ चल भृतौ । १६१० पाल रक्षणे । १६११ लूष हिंसायाम् । १६१२ शुल्ब माने । १६१३ शूर्प च । १६१४ चुट छेदने । १६१५ मुट संचूर्णने । १६१६ पडि १६१७ पसि नाशने । पण्डयति । पण्डति । पंसयति । पंसति । १६१८ व्रज मार्गसंस्कारगत्योः । १६१९ शुल्क अतिस्पर्शने । १६२० चपि गत्याम् । चम्पयति । चम्पति । १६२१ क्षपि क्षान्त्याम् । क्षम्पयति । क्षम्पति । १६२२ छजि कृच्छ्रजीवने । १६२३ श्वर्त गत्याम् । १६२४ श्वभ्र च । १६२५ ज्ञप मिच । अयं ज्ञाने ज्ञापने च वर्तते ॥

२५६८ । मितां ह्रस्वः ।६।४।९२। मितामुपधाया ह्रस्वः स्याण्णौ परे । ज्ञपयति । १६२६ यम च परिवेषणे । चान्मित् । परिवेषणमिह वेष्टनम् । न तु भोजना नापि वेष्टना । यमयति चन्द्रम् । परिवेष्टत इत्यर्थः । १६२७ चह परिकल्कने । चहयति । अचीचहत् । कथादौ वक्ष्यमाणस्य तु अदन्तत्वेनाग्लोपित्वाद्दीर्घसन्वद्भावौ न । अचचहत् । चप इत्येके । चपयति । १६२८ रह त्याग इत्येके । अरीरहत् । कथादेस्तु अररहत् । १६२९ बल प्राणने । बलयति । १६३० चिञ् चयने ॥

२५६९ । चिस्फुरोर्णौ[1] ।६।१।५४। आत्वं वा स्यात् ॥

२५७० । अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ

---

टोपध इति । टोपधत्वे त्वाटिट्ददिति स्यादिति भावः । शठ श्वठ । शाठयति । असंस्कृतो भवति गच्छति वेत्यर्थः ॥ —स्माययत इति । आत्वं तु नेह भवति । 'नित्यं स्मयतेः' इति निर्देशेन 'ष्मिङ् ईषद्धसने' इति भौवादिकादेव हेतुमण्णौ तद्विधानात् । श्रण दाने । विश्राणनं वितरणम् । चुद संचोदने । 'ण्यासश्रन्थः–' इति युचि चोदना । व्रज मार्ग । वाजयति । मार्गयति । केचित्तु मार्गेति न धात्वन्तरं किं तु व्रजेत्येक एव धातुर्मार्गसंस्कारे गतौ चेति व्याचख्युः । ज्ञप मिच्च । चाद्गतावित्येके । ज्ञपधातुर्णिचं लभते मित्संज्ञकश्चेत्यन्ये ॥—ज्ञाने ज्ञापने चेति । 'प्रतिपज्ज्ञप्तिचेतनाः' । प्रच्छ ज्ञीप्सायामित्यत्र ज्ञाने । 'श्लाघह्नुङ्–' इति सूत्रे ज्ञीप्समानो बोधयितुमिच्छमाण इति व्याख्याया ज्ञापने च प्रयोगदर्शनादिति भावः ॥—वेष्टनमिति । 'परिवेषस्तु परिधिः' इत्यमरः ॥—न त्वित्यादि । अयं भावः । घटादौ 'यमोऽपरिवेषणे' इति पठितं तत्र परिवेषणमिति हेतुमण्ण्यन्तस्य रूपम् । हेतुमण्ण्यन्तस्य हि भोजना वेष्टना चार्थः । तथा च परिवेषण इत्यनेन भोजनातो वेष्टनातश्चान्यत्र मित्त्वनिषेधेऽपि तयोरर्थयोस्त्वमन्तत्वादेव मित्त्वसिद्धेरिति । यद्यपि घटादौ यच्छतिर्भोजनातोऽन्यत्र मिन्नेति व्याख्यातं तथाप्यत्रत्यग्रन्थानुगुण्येनोपलक्षणतया तद्व्याख्येयमित्याहुः । अत्रेदं बोध्यम् । घटादौ 'यमोऽपरिवेषणे' इत्यत्र परिपूर्वकस्य विषेर्णिजन्तस्य ल्युटि रूपं, 'यम च परिवेषणे' इत्यत्र तु केवलस्यैव ल्युटि रूपं न तु णिजन्तस्य । तथा च भोजनावद्वेष्टनाया अपि परिवेषणशब्दार्थत्वादुभयत्राप्यमन्तत्वेनैव मित्त्वं सिध्यति । वेष्टने तु अपरिवेषण इत्यनेन अमन्तत्वप्रयुक्तमित्यस्य निषेधेऽपि 'यम च परिवेषणे' इत्यनेन मित्त्वं सिध्यतीति दिक् ॥—चिस्फुरोर्णौ । 'आदेच उपदेशे' इत्यत आदित्यनुवर्तते 'विभाषा लीयतेः' इत्यतो विभाषाग्रहणं च तदाह—आत्वं वा स्यादिति ॥—अर्तिह्री– । परत्वादन्तरङ्गत्वाच्च आदौ पुक् पश्चाद्गुणः । अर्पयति । ह्रेपयति । व्लेपयति ।

---

1 चिस्फुरोरिति—अत्र णिशब्देन चुरादिणिच एव ग्रहणम् । प्रतिपदोक्तत्वात् । अतएव स्वादेश्चेरन्यस्य स्फुरश्चात्र न ग्रहणम् ।

।७।३।३६। चपयति । चययति । जित्करणसामर्थ्यादस्य णिज्विकल्पः । चयति । चयते । प्रणिचयति । प्रनिचयति । (ग) नान्ये मितोऽहेतौ । अहेतौ स्वार्थे णिचि ज्ञपादिभ्योऽन्ये मितो न स्युः । तेन शमादीनाममन्तत्वप्रयुक्तं मित्वं न । १६३१ घट्ट चलने । १६३२ मुस्त संघाते । १६३३ खट्ट संवरणे । १६३४ षट्ट १६३५ स्फिट्ट १६३६ चुबि हिंसायाम् । १६३७ पूल संघाते । पूर्ण इत्येके । पूणेत्यन्ये । १६३८ पुंस अभिवर्धने । १६३९ टकि बन्धने । टङ्कयति । टङ्कति । १६४० धूस कान्तिकरणे । धूसयति । दन्त्यान्तः । मूर्धन्यान्त इत्येके । तालव्यान्त इत्यपरे । १६४१ कीट वर्णे । १६४२ चूर्ण संकोचने । १६४३ पूज पूजायाम् । १६४४ अर्क स्तवने । तपन इत्येके । १६४५ शुठ आलस्ये । १६४६ शुठि शोषणे । शुण्ठयति । शुण्ठति । १६४७ जुड प्रेरणे । १६४८ गज १६४९ मार्ज शब्दार्थौ । गाजयति । मार्जयति । १६५० मर्च च । मर्चयति । १६५१ घृ प्रस्रवणे । स्रावण इत्येके । १६५२ पचि विस्तारवचने । पञ्चयति । पञ्चति । पञ्चते इति व्यक्तार्थस्य शपि गतम् । १६५३ तिज निशाने । तेजयति । १६५४ कृत संशब्दने ॥

२५७१ । उपधायाश्च ।७।१।१०१। धातोरुपधाभूतस्य ऋत इत्स्यात् । रपरत्वम् । 'उपधायां च २२६५' इति दीर्घः । कीर्तयति । 'उर्ऋत् २५६७' । अचीकृतत् । अचिकीर्तत् । १६५५ वर्ध छेदनपूरणयोः । १६५६ कुबि आच्छादने । कुम्बयति । कुम्बति । कुभि इत्येके । १६५७ लुबि १६५८ तुबि अदर्शने । अर्दन इत्येके । १६५९ ह्लप व्यक्तायां वाचि । क्लृप इत्येके । १६६० चुटि छेदने । १६६१ इल प्रेरणे । एलयति । ऐलिलत् । १६६२ म्रक्ष म्लेच्छने । १६६३ म्लेच्छ अव्यक्तायां वाचि । १६६४ ब्रूस १६६५ बर्ह हिंसायाम् । केचिदिह गर्ज गर्द शब्दे । गर्ध अभिकाङ्क्षायामिति पठन्ति । १६६६ गुर्द पूर्वनिकेतने । १६६७ जसि रक्षणे । मोक्षण इति केचित् । जंसयति । जंसति । १६६८ ईड स्तुतौ । १६६९ जसु हिंसायाम् । १६७० पिडि संघाते । १६७१ रुष रोषे । रुट इत्येके । १६७२ डिप क्षेपे । १६७३ ष्टुप समुच्छ्राये ॥

आ कुस्मादात्मनेपदिनः । कुस्मनाम्नो वेति वक्ष्यते तमभिव्याप्येत्यर्थः । अकर्तृगामिफलार्थमिदम् । १६७४ चित संचेतने । चेतयते । अचीचितत । १६७५ दशि दंशने । दंशयते । अददंशत । इदित्वाण्णिजभावे । दंशति । आकुस्मीयमात्मनेपदं णिच्सन्नियोगेनैवेति व्याख्यातारः । नलोपे सञ्जिसाहचर्याद् भ्वादेरेव ग्रहणम् । १६७६ दसि दर्शनदंशनयोः । दंसयते । दंसति । दसेत्यप्येके । १६७७ डप १६७८ डिप संघाते । १६७९ तत्रि कुटुम्बधारणे । तन्त्रयते । चान्द्रास्तु धातुद्वयमिति कृत्वा कुटुम्बयते इत्युदाहरन्ति । १६८० मन्त्रि गुप्तपरिभाषणे । १६८१ स्पश ग्रहणसंश्लेषणयोः । १६८२ तर्ज १६८३ भर्त्स तर्जने । १६८४ बस्त १६८५ गन्ध

---

रेपयति । यलोपः । क्नोपयति । क्ष्मापयति । स्थापयति ॥—चपयतीति । वर्णग्रहणे लक्षणप्रतिपदोक्तपरिभाषा न प्रवर्तते । 'आतोऽनुपसर्गे' इति कबाधनाय 'ह्वावामश्च' इत्यारम्भादिति भावः ॥—ज्ञपादिभ्य इति । मुख्यमते पञ्च ज्ञपादयः । मतान्तरे तु सप्त ॥—पूर्ण इत्येके । पुण्येत्यन्ये इति । ईदृशेषु पाठशुद्धिर्निर्णेतुमशक्या । अत एव क्षीरस्वामिनोक्तम्—'पाठेऽर्थे चागमभ्रंशान्महतामपि मोहतः । न विद्मः किं जहीमोऽत्र किमुपाददाहे वयम्' इति । पूल । पूर्णादिषु पाठे भ्रंशः । वजधातोर्मार्गसंस्कारोऽर्थ उत संस्कार एवेत्यर्थे भ्रंशः । आगमभ्रंशात् शास्त्रभ्रंशात् । चूर्ण संकोचने । प्रेरणे पठितस्य पुनः पाठोऽर्थभेदकृतः ॥— मर्च चेति । क्वचिद्धातुपाठेऽस्यादृष्टत्वेऽपि नायमप्रामाणिक इति मन्तव्यम् । 'मिदचोऽन्त्यात्परः' इति सूत्रे कैयटेनास्योपन्यस्तत्वात् । 'मर्तो मर्तं मर्चयति द्वयेन' इति प्रयोगदर्शनाच्च ॥—उपधायाश्च । 'ऋत इद्धातोः' इति वर्तते तदाह—धातोरुपधाया इति । ननु 'ऋत इद्धातोः' इति सूत्रे धातोर्ऋत इति वैयधिकरण्येन व्याख्याने सिद्धमिष्टमिति किमनेन सूत्रेणेति चेत् । मैवम् । तथा हि सति ऋकारीयतीत्यत्रापि इत्वप्रसङ्गात् ॥—अर्दन इत्येक इति । अत्र वदन्ति । अर्दने लुबितुबी भ्वादौ पठितौ तयोस्तत्र पाठो वृथा स्यात् । इदित्वादेव लुम्बति तुम्बतीत्यादिरूपसिद्धेः । अदर्शने त्वर्थेऽर्थभेदात् भ्वादिपाठः सार्थक इत्यर्दनार्थत्वं चौरादिकयोरयुक्तमित्यस्वरसादेक इत्युक्तमिति । म्रक्ष म्लेच्छने । म्रक्षणेऽप्ययम् । तच्च तैलादिनाऽभ्यञ्जनम् । म्रक्षयति । अमम्रक्षत् । गुर्द पूर्व निकेतने । गुर्दयति । पूर्वयति । केचित्तु पूर्वनिकेतने इति पठित्वा गुर्दधातुः पूर्वनिवासे वर्तते इति व्याचक्षते । जसु हिंसायाम् । क्त्वायामिड्विकल्पार्थमुदित्करणमिति तत्सामर्थ्यादस्य णिजनित्यः । जासयति । जसति । जसित्वा । जस्त्वा । जस्तम् । चित संचेतने । संचेतनं मूर्छाद्यवस्थानिवृत्त्युत्तरकालिकं ज्ञानम् ॥—दंशतीति । इह 'दंशसञ्ज—' इति नलोपमाशङ्क्याह—सञ्जिसाहचर्यादिति । स्पश । स्पाशयते । 'अत्स्मृदृत्वर—' इत्यादिनाऽभ्यासस्य अत्वम् । इत्यापवादः । अपस्पशत् । तर्ज भर्त्स तर्जने । तर्जयते । भर्त्सयते । 'तर्जयन्निव केतुभिः' इति प्रयोगस्तु णिजन्तादस्मा-

---

इति प्राञ्चः । नवीनास्तु चिनो जित्वसामर्थ्यात् णिशब्देन चिशब्देन चोभयोर्ग्रहणम् स्फुरशब्देनापि । प्रतिपदोक्तपरिभाषा तु ईदृशीत्वा असार्वत्रिकी । एवं च स्वादेश्चेहेतुगणिच्चि आत्वं भवत्येवेति वदन्ति ।

अर्दने । वस्तयते । गन्धयते । १६८६ विष्क हिंसायाम् । हिष्केत्येके । १६८७ निष्क परिमाणे । १६८८ लल ईप्सायाम् । १६८९ कूण संकोचने । १६९० तूण पूरणे । १६९१ भ्रूण आशाविशङ्कयोः । १६९२ शठ श्लाघायाम् । १६९३ यक्ष पूजायाम् । १६९४ स्यम वितर्के । १६९५ गूर उद्यमने । १६९६ शम १६९७ लक्ष आलोचने । नान्ये मित इति मित्त्वनिषेधः । शामयते । १६९८ कुत्स अवक्षेपणे । १६९९ त्रुट छेदने । कुट इत्येके । १७०० गल स्रवणे । १७०१ भल आभण्डने । १७०२ कूट आप्रदाने । अवसादने इत्येके । १७०३ कुट्ट प्रतापे । १७०४ वञ्चु प्रलम्भने । १७०५ वृष शक्तिबन्धने । शक्तिबन्धनं प्रजननसामर्थ्यं शक्तिवन्धश्च । वर्षयते । १७०६ मद तृप्तियोगे । मादयते । १७०७ दिव परिकूजने । १७०८ गृ विज्ञाने । गारयते । १७०९ विद चेतनाख्याननिवासेषु । वेदयते । सत्तायां विद्यते ज्ञाने वेत्ति विन्ते विचारणे । विन्दते विन्दति प्राप्तौ श्यन्लुक्श्नम्शेष्विदं क्रमात् । १७१० मान स्तम्भे । मानयते । १७११ यु जुगुप्सायाम् । यावयते । (ग) १७१२ कुस्म नाम्नोवा । कुस्मेति धातुः कुत्सितस्मयने वर्तते । कुस्मयते । अचुकुस्मत । अथवा कुस्मेति प्रातिपदिकं ततो धात्वर्थे णिच् । इत्याकुस्मीयाः ॥

१७१३ चर्च अध्ययने । १७१४ वुक्क भषणे । १७१५ शब्द उपसर्गादाविष्कारे च । चाद्भषणे । प्रतिशब्दयति । प्रतिश्रुतमाविष्करोतीत्यर्थः । अनुपसर्गाच्च । आविष्कारे इत्येव । शब्दयति । १७१६ कण निमीलने । काणयति । 'णौ चङ्युपधाया ह्रस्वः १३२४' । ॐ काण्यादीनां वेति विकल्प्यते । अचीकणत् । अचकाणत् । १७१७ जभि नाशने । जम्भयति । जम्भति । १७१८ षूद क्षरणे । सूदयति । असूषुदत् । १७१९ जसु ताडने । जासयति । जसति । १७२० पश बन्धने । पाशयति । १७२१ अम रोगे । आमयति । नान्ये मित इति निषेधः । अम गत्यादौ शपि गतः । तस्माद्धेतुमण्णौ न कम्यमिचमामिति निषेधः । आमयति । १७२२ चट १७२३ स्फुट भेदने । विकासे शशपोः स्फुटति स्फोटते इत्युक्तम् । १७२४ घट संघाते । घाटयति । (ग) हन्त्यर्थाश्च । नवगण्यामुक्ता अपि हन्त्यर्थाः स्वार्थे णिचं लभन्त इत्यर्थः । १७२५ दिवु मर्दने । उदित्त्वाद्देवतीत्यपि १७२६ अर्ज प्रतियत्ने । अयमर्थान्तरेऽपि । द्रव्यमर्जयति । १७२७ घुषिर् विशब्दने । घोषयति । 'घुषिरविशब्दने ३०६३' इति सूत्रेऽविशब्दन इति निषेधाल्लिङ्गादनित्योऽस्य णिच् । घोषति । इरित्वादङ्वा । अघुषत् । अघोषीत् । ण्यन्तस्य तु अजूघुषत् । आङः १७२८ क्रन्द सातत्ये । भौवादिकः क्रन्दधातुराह्वानाद्यर्थे उक्तः स एवाङ्पूर्वो णिचं लभते । सातत्ये । आक्रन्दयति । अन्ये तु आङ्पूर्वो घुषिः क्रन्दसातत्ये इत्याहुः । आघोषयति । १७२९ लस शिल्पयोगे । १७३० तसि १७३१ भूष

---

द्धौवादिकात् तर्जतेर्वा हेतुमण्णिचि बोध्यः । भ्रूण । भ्रूणयते । 'भ्रूणोऽर्भके स्त्रैणगर्भे' इत्यमरः । गूर उद्यमने । दीर्घोपधोऽयम् । गूरयते । ह्रस्वोपधस्तु दिवादौ तुदादौ चेति मनोरमायां स्थितम् । यद्यपि तुदादौ गुरी उद्यमने इति पाठाद्ध्रस्वोपध एव तथापि दिवादौ धूरी गूरी हिंसागत्योरिति पाठान्नास्ति ह्रस्वोपध इति नव्याः । शम लक्ष । ननु 'निशामय तदुत्पत्तिम्' इत्यत्र शामय इत्येतत् शमु उपशम इत्यस्माण्णिचि रूपं चेत् अमन्तत्वान्मित्त्वे सति ह्रस्वेन भाव्यमित्याशङ्क्य कथमनेन सिद्धमिति वदन्ति । आकुस्मीयत्वात्तङि निशामयस्वेति रूपस्य सर्वसंमतत्वादिति चेत् । अत्राहुः । स्वार्थण्यन्तादस्माद्धेतुमण्णिचि निशामयेति रूपम् । न चार्थासंगतिः । 'निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते' इति सिद्धान्तादिति । कुत्स अवक्षेपणे । 'यूनश्च कुत्सायाम्' इति निर्देशादङ् । कुत्सा । 'ण्यासश्रन्थ–' इति युच् । कुत्सना । भल । आभण्डनं निरूपणमित्याहुः । वञ्चु प्रलम्भने । ल्युटि वञ्चनम् । उदित्करणस्य क्त्वायामिड्विकल्पार्थत्वाण्णिजनित्यः । वञ्चयति । वञ्चति । वचित्वा वञ्चित्वा । वक्त्वा । 'वञ्चिलुञ्च्यृतश्च' इति सेटः क्त्वः कित्त्वविकल्पनात् पाक्षिको नलोपः । इडभावे तु नित्यम् । निष्ठायां तु वक्तम् । 'यस्य विभाषा' इतीण्निषेधः नाम्नो वेति वाशब्दं व्याचष्टे—अथ वेति—॥—प्रातिपदिकमिति । 'अन्येष्वपि दृश्यते' इति सूत्रे अन्येभ्योऽपीति वक्ष्यमाणत्वात्कुपूर्वात्स्मयतेर्डप्रत्यये टिलोपे 'कुगति–' इति समासे च निष्पन्नमित्यर्थः । यद्यपि कुपूर्वस्य स्मिङो लडादिषु कुस्मयते इत्यादि सिद्धं तथापि प्रकुस्मयते इत्यादि न सिध्येदुपसर्गस्य धातुना व्यवधानायोगात् । कुस्मयांचक्रे इत्याद्यर्थमपि कुस्मेति पाठोऽर्थवान् ॥ इत्याकुस्मीयाः ॥ चर्च । सर्वोऽपि चुरादिणिच् पाक्षिक इति पक्षे 'गुरोश्च हलः' इत्यप्रत्ययः । चर्चा । कण निमीलने । एकनेत्रनिमीलन एवायं शब्दः स्वभावात् । काणः ॥—काण्यादीनामिति । एते हेतुमण्ण्यन्तेषु वक्ष्यन्ते । हन्त्यर्थाश्च । तेन घातयति हन्तीत्येतौ समानार्थौ । अर्ज । प्रतियत्नो गुणाधानम् ॥—अर्जयतीति । संगृह्णातीत्यर्थः । घुषिर् । अविशब्दनं प्रतिज्ञानम् ॥—निषेधाल्लिङ्गादिति । घुषिरविशब्दन इति सूत्रेण अविशब्दने निष्ठाया इण्निषिध्यते विशब्दनार्थादेतस्मादनन्तरा निष्ठा नास्त्येव णिचा व्यवधानात् । अतो घुषिरविशब्दन इति भौवादिकादेव निष्ठाया इण्निषेधो भवेदिति किं विशब्दनप्रतिषेधेन । ततश्चानेनैव विशब्दनप्रतिषेधेनानित्योऽस्य णिजिति ज्ञाप्यते इति भावः । इरित्करणादपि णिज्विकल्पः सिध्यतीति केचित् ॥—शिल्पयोग इति । क्रियाकौशलं शिल्पम् । यत निकारोपस्कारयोः । यत्नो वा प्रैषो वा

अलंकरणे । अवतंसयति । अवतंसति । भूषयति । १७३२ अर्ह पूजायाम् । १७३३ ज्ञा नियोगे । आज्ञापयति । १७३४ भज विश्राणने । १७३५ शृधु प्रहसने । अशशर्धत् । अशीशृधत् । १७३६ यत निकारोपस्कारयोः । १७३७ रक १७३८ लग आस्वादने । रघ इत्येके । रग इत्यन्ये । १७३९ अञ्चु विशेषणे । अञ्चयति । उदित्त्वमिड्विकल्पार्थम् । अत एव विभाषितो णिच् । अञ्चति । एवं शृधुजसुप्रभृतीनामपि बोध्यम् । १७४० लिगि चित्रीकरणे । लिङ्गयति । लिङ्गति । १७४१ मुद संसर्गे । मोदयति सक्तून् घृतेन । १७४२ त्रस धारणे । ग्रहण इत्येके । वारण इत्यन्ये । १७४३ उध्रस उञ्छे । उकारो धात्ववयव इत्येके । नेत्यन्ये । ध्रासयति । ध्रसति । उध्रासयति । १७४४ मुच प्रमोचने मोदने च । १७४५ वस स्नेहच्छेदापहरणेषु । १७४६ चर संशये । १७४७ च्यु सहने । हसने चेत्येके । च्यावयति । च्युसेत्येके । च्योसयति । १७४८ भुवोऽवकल्कने । अवकल्कनं मिश्रीकरणमित्येके । चिन्तनमित्यन्ये । भावयति । १७४९ कृपेश्च । कल्पयति ॥

(ग) आ स्वदः स्वकर्मकात् । स्वदिमभिव्याप्य संभवत्कर्मभ्य एव णिच् । १७५० ग्रस ग्रहणे । ग्रासयति फलम् । १७५१ पुष धारणे । पोषयत्याभरणम् । १७५२ दल विदारणे । दालयति । १७५३ पट १७५४ पुट १७५५ लुट १७५६ तुजि १७५७ मिजि १७५८ पिजि १७५९ लुजि १७६० भजि १७६१ लघि १७६२ त्रसि १७६३ पिसि १७६४ कुसि १७६५ दशि १७६६ कुशि १७६७ घट १७६८ घटि १७६९ बृहि १७७० बर्ह १७७१ बल्ह १७७२ गुप १७७३ धूप १७७४ विच्छ १७७५ चीव १७७६ पुथ १७७७ लोकृ १७७८ लोचृ १७७९ णद १७८० कुप १७८१ तर्क १७८२ वृतु १७८३ वृधु भाषार्थाः । पाटयति । पोटयति । लोटयति । तुञ्जयति । पिञ्जति । एवं परेषाम् । घाटयति । घण्टयति ॥

२५७२ । नाग्लोपिशास्वृदिताम् ।७।४।२। णिच्यग्लोपिनः शास्तेॠदितां च उपधाया ह्रस्वो न स्याच्चङ्परे णौ । अलुलोकत् । अलुलोचत् । वर्तयति । वर्धयति । उदित्त्वाद्वर्तति । वर्धति । १७८४ रुट १७८५ लजि १७८६ अजि १७८७ दसि १७८८ भृशि १७८९ रुशि १७९० शीक १७९१ रुसि १७९२ नट १७९३ पुटि १७९४ जि १७९५ चि १७९६ रघि १७९७ लघि १७९८ अहि १७९९ रहि १८०० महि च । १८०१ लडि १८०२ तड १८०३ नल च । १८०४ पूरी आप्यायने । ईदित्त्वं निष्ठायामिण्निषेधाय । अत एव णिज्वा । पूरयति । पूरति । १८०५ रुज हिंसायाम् । १८०६ ष्वद आस्वादने । स्वाद इत्येके । असिष्वदत् । दीर्घस्य त्वपोपदेशत्वात् । असिस्वदत् । इत्यास्वदीयाः ॥

(ग) आ धृषाद्वा ॥ इत ऊर्ध्वं विभाषितणिचो धृषधातुमभिव्याप्य । १८०७ युज १८०८ पृच संयमने । योजयति । योजति । अयौक्षीत् । पर्चयति । पर्चति । पर्चिता । अपर्चीत् । १८०९ अर्च पूजायाम् । १८१० षह मर्षणे । साहयति ॥ स एवायं नागः सहति कलभेभ्यः परिभवम् । १८११ ईर क्षेपे । १८१२ ली द्रवीकरणे । लापयति[1] । लयति । लेता । १८१३ वृजी वर्जने । वर्जयति । वर्जति । १८१४ वृञ् आवरणे । वारयति । वरति । वरते । वरिता । वरीता । १८१५ जॄ वयोहानौ । जारयति । जरति । जरिता । जरीता । १८१६ ज्रि च । ज्राययति । ज्रयति । ज्रेता । १८१७

---

निकारः । निकारोपस्कारयोरिति पाठान्तरम् । क्रियानिघण्टौ च 'यत्ने प्रैषे निराकारे पादपे चाप्युपस्कृतौ । नित्योऽयं धान्यधनयोः प्रतिदाने' इत्युक्तम् । अस्यार्थः । यत्नाद्यर्थेषु चतुर्षु यतधातुं प्रयुञ्जीत । निरः परभागे चेत्प्रयुज्यते तदाऽयं धान्यधनयोः प्रतिदाने वर्तत इति । ऋणं निर्यातयति । प्रतिददातीत्यर्थः । **अञ्चु** विशेषणे । विशेषणं व्यावर्तनम् । भुवोऽवकल्कने । भूधातोर्णिच् स्यात्—॥ **भावयतीति** । मिश्रीकरोतीति चिन्तयति वेत्यर्थः । **कृपेश्च** । कृपेर्णिच् स्यादवकल्कने । **आस्वदः** ॥—**अभिव्याप्येति** । आकुस्मादिति पूर्वत्र आधृषादागर्वादिति परत्र च आङोऽभिविध्यर्थतायाः सर्वसंमतत्वेन तन्मध्यपतितेऽत्रापि तथैव व्याख्यानमुचितमिति भावः । अन्ये त्वाङ्पूर्वकात्स्वदः सकर्मकाण्णिजिति व्याचख्युः । आस्वदीयेषु धातवः सर्वे सकर्मकाः ॥—**घाटयतीति** । अयं चुरादावेव संघाते गतः, पुनः पाठस्तु अर्थभेदात् ॥—**स्वाद इत्येक इति** । अस्मिन् मते पूर्वत्राप्यास्वादः सकर्मकादिति पाठ्यम् । ननु दीर्घपाठो व्यर्थः । ह्रस्वपाठेऽप्युपधावृद्ध्या स्वादयतीति रूपाणां तुल्यत्वादत आह—**दीर्घस्य त्विति** । 'सः स्विदिस्वदिसहीनां च' इति सूत्रेण अभ्यासेणः परस्य सस्य सकारो न तु षत्वमिति वक्ष्यमाणत्वात्सन्नन्तेऽपि सिस्वादयिषतीत्यादि रूपं तुल्यमेवेत्यभिप्रेत्याह—**असिस्वददिति** ॥ इत्यास्वदीयाः ॥—**आधृषाद्वा** । व्याख्यानात्, योग्यतावलाद्वा णिजिति संबध्यते ॥—**अयौक्षीदिति** । णिजभावपक्षे अनिट्कोऽयमिति भावः । **ली** द्रवीकरणे । लिनातिलीयत्योर्यका निर्देश इति भाष्यकारोक्तत्वात् 'विभाषा लीयतेः' इत्यात्वमिह न प्रवर्तत इति ध्वनयति—**लेतेति** ॥—**वरीतेति** । 'वृतो वा' इति वा दीर्घः । लिङि वूर्यात् । आत्मनेपदे तु वृषीष्ट । वरिषीष्ट । 'लिङ्सिचोरात्मनेपदेषु' इति वेट् । 'न लिङि' इति इटो दीर्घनि-

---

१ लापयतीति—'लीलोः—' इति नुक् न भवति, लासाहचर्याद्धेतुमण्णावेव तस्य प्रवृत्तेः ।

रिच वियोजनसंपर्चनयोः । रेचयति । रेचति । रेक्ता । १८१८ शिष असर्वोपयोगे । शेषयति । शेषति । शेष्टा । अशिक्षत् । अयं विपूर्वोऽतिशये । १८१९ तप दाहे । तापयति । तपति । तप्ता । १८२० तृप तृप्तौ । संदीपन इत्येके । तर्पयति । तर्पति । तर्पिता । १८२१ छृदी सन्दीपने ॥ छर्दयति । छर्दति । छर्दिता । छर्दिष्यति । 'सेसिचि–२५०६' इति विकल्पो न । साहचर्यात्तत्र रौधादिकस्यैव ग्रहणात् । चृप छृप तृप दृप संदीपन इत्येके । चर्पयति । छर्पयति । १८२२ दृभी भये । दर्भयति । दर्भति । दर्भिता । १८२३ दृभ संदर्भे ॥ अयं तुदादावीदित् । १८२४ श्रथ मोक्षणे । हिंसायामित्येके । १८२५ मी गतौ । माययति । मयति । मेता । १८२६ ग्रन्थ बन्धने । ग्रन्थयति । ग्रन्थति । १८२७ शीक आमर्षणे । १८२८ चीक च । १८२९ अर्द हिंसायाम् । स्वरितेत् । अर्दयति । अर्दति । अर्दते । १८३० हिसि हिंसायाम् ॥ हिंसयति । हिंसति । हिनस्तीति श्नमि गतम् । १८३१ अर्ह पूजायाम् । आङः १८३२ षद पद्यर्थे । आसादयति । आसीदति । 'पाघ्रा–२३६०' इति सीदादेशः ॥ आसत्ता । आसात्सीत् । १८३३ शुन्ध शौचकर्मणि ॥ शुन्धिता । अशुन्धीत् । अशुन्धिष्टाम् । १८३४ छद अपवारणे । स्वरितेत् । १८३५ जुष परितर्कणे ॥ परितर्कणमूहो हिंसा वा । परितर्पण इत्यन्ये ॥ परितर्पणं परितृप्तिक्रिया । जोषयति । जोषति । प्रीतिसेवनयोर्जुषते इति तुदादौ । १८३६ धूञ् कम्पने ॥ णावित्यधिकृत्य ॥ ॐ धूञ्प्रीञोर्नुग्वक्तव्यः ॥ धूनयति । धवति । धवते । केचित्तु धूञ्प्रीणोरिति पठित्वा प्रीणातिसाहचर्याद्धुनातेरेव नुकमाहुः । धावयति । अयं स्वादौ क्र्यादौ तुदादौ च । स्वादौ ह्रस्वश्च । तथा च कविरहस्ये ॥ धूनोति चम्पकवनानि धुनोत्यशोकं चूतं धुनाति धुवति स्फुटितातिमुक्तम् ॥ वायुर्विधूनयति चम्पकपुष्परेणून्यत्कानने धवति चन्दनमञ्जरीश्च । १८३७ प्रीञ् तर्पणे ॥ प्रीणयति । धूञ्प्रीणोरिति हरदत्तोक्तपाठे तु । प्राययति । प्रयति । प्रयते । १८३८ श्रन्थ १८३९ ग्रन्थ सन्दर्भे । १८४० आपॢ लम्भने । आपयति । आपिपत् । आपति । आप्ता । आपत् । स्वरितेदयमित्येके । आपते । १८४१ तनु श्रद्धोपकरणयोः ॥ उपसर्गाच्च दैर्घ्ये ॥ तानयति । वितानयति । तनति । वितनति । चन श्रद्धोपहननयोरित्येके ॥ चानयति । चनति । १८४२ वद संदेशवचने ॥ वादयति । स्वरितेत् । वदति । वदते । अनुदात्तेदित्येके । ववदतुः । ववदिथ । ववदे । वद्यात् । १८४३ वच परिभाषणे । वाचयति । वचति । वक्ता । अवाक्षीत् ।

१८४४ मान पूजायाम् । मानयति । मानति । मानिता । विचारणे तु भौवादिको नित्यसन्नन्तः । स्तम्भे मानयते । इत्याकुस्मीयाः । मन्यते इति दिवादौ । मनुते इति तनादौ च । १८४५ भू प्राप्तावात्मनेपदी । भावयते । भवते । णिचस्तन्नियोगेनैवात्मनेपदमित्येके । भवति । १८४६ गर्ह विनिन्दने । १८४७ मार्ग अन्वेषणे । १८४८ कठि शोके । उत्पूर्वोऽयमुत्कण्ठायाम् । कण्ठते इत्यात्मनेपदी गतः । १८४९ मृजू शौचालंकारयोः । मार्जयति । मार्जति । मार्जिता । मार्ष्टा । १८५० मृष तितिक्षायाम् । स्वरितेत् । मर्षयति । मर्षति । मर्षते । मृष्यति मृष्यते इति दिवादौ । सेचने शपि मर्षति । १८५१ धृष प्रहसने । धर्षयति । धर्षति । इत्याधृषीयाः ॥

अथादन्ताः ॥ १८५२ कथ वाक्यप्रबन्धे ॥ अल्लोपस्य स्थानिवद्भावान्न वृद्धिः । कथयति । अग्लोपित्वान्न दीर्घसन्वद्भावौ । अचकथत् । १८५३ वर ईप्सायाम् । वरयति । वारयतीति गतम् । १८५४ गण संख्याने । गणयति ॥

---

षेधः । इडभावपक्षे 'उश्च' इति कित्त्वान्न गुणः । लुङि अवारीत् । अवारिष्टाम् । अवारिषुः । 'सिचि च परस्मैपदेषु' इति दीर्घनिषेधः । आत्मनेपदे तु । अवरिष्ट । अवरीष्ट । इडभावे सिचो लोपः । अवृत । **रिच** । णिजभावे अयमनिडित्याह—**रेक्तेति** ॥—**अशिक्षदिति** । 'शल इगुपधात्–' इति क्सः । **तृप** । अनिट्सु श्यना निर्देशादयं सेडिति ध्वनयति—**तर्पितेति** । **छृदी** । ईदित्वान्निष्ठायामनिट् । ऋवर्णान्तस्य णत्वम् । छृण्णः । छृण्णवान् ॥—**ह्रस्वश्चेति** । धुञ् कम्पने इत्यर्थः ॥—**अवाक्षीदिति** । 'अस्यतिवक्ति–' इति लुका निर्देशादङ् नेति भावः । 'वचिस्वपि–' इति संप्रसारणम् । उच्यात् । **धृष** प्रसहने । केचित्त्वादितमाहुस्तन्मते धृष्टो मुख्यमते तु धर्षितः । नन्वत्र 'निष्ठा शीङ्–' इत्यादिना सेण्निष्ठायाः कित्त्वनिषेधाद्गुणेन भाव्यमिति चेत् । अत्राहुः । आदित्साहचर्यादादित एव निधृषेत्यस्य तत्र ग्रहणात् । न च आदितो निष्ठाया इट् दुर्लभ इति शङ्क्यम् । 'विभाषा भावादिकर्मणोः' इति तत्संभवादिति ॥ इत्याधृषीयायुजादयः ॥ ॥ **अथादन्ता इति** । वक्ष्यमाणेषु धातुषु अन्त्यावयवोऽकारो न तूच्चारणार्थ इत्यर्थः ॥—**स्थानिवत्त्वान्न वृद्धिरिति** । 'अचः परस्मिन्–' इति सूत्रेणेत्यर्थः । न च स्थानिनि सति यत्कार्यं तदेव स्थानिवदित्यनेनातिदिश्यते न लादेशप्रयुक्तं वार्यते । अन्यथा नायकः पावकः इत्यादि न सिध्येदिति वृद्धिरत्र दुर्वारेति वाच्यम् । 'अचः परस्मिन्' इत्यत्र स्थानिवदित्यनुवर्त्य शब्दाधिकारपक्षाश्रयेण भावाभावावुभावप्यतिदिश्येते इति सिद्धान्तात् । स्थानिनि सत्यभवन्त्या वृद्धेरादेशेऽप्यभावात् । स्थानिनि सति यन्न भवति तदादेशेऽपि न भवतीत्यत्र तु 'न पदान्त–' इति सूत्रस्थयलोपादिग्रहणमेव लिङ्गमिति दिक् ॥

२५७३। ई च गणः ।७।४।९७। गणेरभ्यासस्य ई स्याच्चाच्चङ्परे णौ। अजीगणत्। अजगणत्। १८५५ शठ १८५६ श्वठ सम्यगवभाषणे। १८५७ पठ १८५८ वठ ग्रन्थे। १८५९ रह त्यागे ॥ अररहत्। १८६० स्तन १८६१ गदी देवशब्दे। स्तनयति। गदयति अजगदत्। १८६२ पत गतौ वा ॥ वा णिजन्तः। वाऽदन्त इत्येके। आद्ये। पतयति। पतति। पतांचकार। अपतीत्। द्वितीये। पातयति। अपीपतत्। १८६३ पष अनुपसर्गात्। गतावित्येव। पषयति। १८६४ स्वर आक्षेपे। स्वरयति। १८६५ रच प्रतियत्ने। रचयति। १८६६ कल गतौ संख्याने च। १८६७ चह परिकल्कने। परिकल्कनं दम्भः शाठ्यं च। १८६८ मह पूजायाम्। महयति। महतीति शपि गतम्। १८६९ सार १८७० कृप १८७१ श्रथ दौर्बल्ये। सारयति। कृपयति। श्रथयति। १८७२ स्पृह ईप्सायाम्। १८७३ भाम क्रोधे। अबभामत्। १८७४ सूच पैशून्ये ॥ सूचयति। अषोपदेशत्वान्न षः। असूसुचत्। १८७५ खेट भक्षणे ॥ तृतीयान्त इत्येके ॥ खोट इत्यन्ये। १८७६ क्षोट क्षये। १८७७ गोम उपलेपने। अजुगोमत्। १८७८ कुमार क्रीडायाम्। अचुकुमारत्। १८७९ शील उपधारणे। उपधारणमभ्यासः। १८८० साम सान्त्वप्रयोगे। अससामत्। साम सान्त्वने इत्यतीतस्य तु असीषमत्। १८८१ वेल कालोपदेशे। वेलयति। काल इति पृथग्धातुरित्येके। कालयति। १८८२ पल्यूल लवनपवनयोः। १८८३ वात सुखसेवनयोः। गतिसुखसेवनयोरित्येके। वातयति। अववातत्। १८८४ गवेष मार्गणे। अजगवेषत्। १८८५ वास उपसेवायाम्। १८८६ निवास आच्छादने। अनिनिवासत्। १८८७ भाज पृथक्कर्मणि। १८८८ सभाज प्रीतिदर्शनयोः। प्रीतिसेवनयोरित्यन्ये। सभाजयति। १८८९ ऊन परिहाणे। ऊनयति। 'ओः पुयण्जि–२५७७' इति सूत्रे पययोरिति वक्तव्ये वर्गप्रत्याहारजग्रहो लिङ्गं णिच्यच आदेशो न स्याद्द्वित्वे कार्ये इति। यत्र द्विरुक्तावभ्यासोत्तरखण्डस्याद्योऽच् प्रक्रियायां परिनिष्ठिते

**ई च गणः**। 'अत्स्मृदॄत्वर–' इत्यत्र योऽत् स चकारेण समुच्चीयते। **स्तन गदी**। गदीत्यत्र इका निर्देशादतो लोपः। अनेकाच्त्वेनाषोपदेशत्वात्षत्वं न ॥—तिस्तनयिषति। 'स्तनिहृषिपुषि–' इति णेरिष्णुचि 'अयामन्ता–' इत्ययादेशः। 'स्तनयित्नुर्बलाहकः'। **पत गतौ वा**। गणसूत्रमिदम् ॥—**कृपयतीति**। 'कृपो रो लः' इति न प्रवर्तते। तत्र कृपू सामर्थ्ये इत्यस्य ग्रहणात्। कृपप्रकृतिकणिजन्तस्य तु धात्वन्तरत्वात्। **स्पृह**। आप्तुमिच्छा ईप्सा ॥—**अबभामदिति**। अल्लोपस्य स्थानिवत्त्वात् 'णौ चङि–' इत्युपधाह्रस्वो न। **सूच**। पिशुनो दुर्जनस्तस्य कर्म पैशुन्यम् ॥—**अषोपदेशत्वादिति**। अनेकाच्त्वादिति भावः ॥—**साम सान्त्वने इत्यतीतस्य त्विति**। अयं धातुः इतः प्राङ् मूलपुस्तके न कुत्रापि दृष्टः पुस्तकान्तरेषु मृग्यः। केचित्तु साम सान्त्वने इत्यस्य क्वाप्यपठितत्वेऽपि षान्त्व सामप्रयोगे इति प्राक्पठितमेव। तत्र च षान्त्व सामेति धातुद्वयं प्रयोगे वर्तते। प्रयोगश्च सान्त्वप्रयोगपरः। स च सान्त्वनमेवेत्येवं ग्रन्थकाराशयं वर्णयित्वा स्थितस्य गतिं समर्थयन्ते। **गवेष**। मार्गणमन्वेषणम्। **ऊन** परिहाणे। अस्माण्णौ चङि द्वित्वात्परत्वादन्तरङ्गत्वाच्च अल्लोपेन 'अजादेर्द्वितीयस्य' इति णिचा सह द्वित्वे औनिनदित्यनिष्टं प्रसज्येत, किं तु औननदित्येवं रूपमिष्टम्। तच्च नशब्दस्य द्वित्वं विना न संभवति। न च 'द्विर्वचनेऽचि' इति सूत्रेण द्वित्वे कर्तव्ये अल्लोपस्य स्थानिवद्भावान्निषेधाद्वा नशब्दस्य द्वित्वं सिध्यतीति वाच्यम्। णिचो द्वित्वनिमित्तत्वाभावादत आह—**ओः पुयण्जीत्यादि**। संपूर्णसूत्रं लिङ्गमिति केषांचिद् भ्रमं निवर्तयितुमाह—**पययोरिति**। अयं भावः। 'स्रिपूङ्र्ज्वशां सनि' 'सनीवन्तर्ध–' इति सूत्राभ्यां पूङ्यौतिभ्यां परस्य सन इडागमे कृते 'द्विर्वचनेऽचि' इति स्थानिवद्भावादादेशनिषेधाद्वा उवर्णान्तस्यैव द्वित्वमिति पुपविषते। पुपविषतीत्यनिष्टं प्रसज्यते। ततश्चाभ्यासोवर्णस्येत्वार्थं पययोरित्यपेक्षितम्। अन्यथा पिपविषते। पिपविषतीति न सिध्येदिति ॥—**वर्गप्रत्याहारेति**। पुयण्जीति वर्गादिग्रहणफलं तु अबीभवत् अमीमवत् अरीरवत् अलीलवत् अजीजवत् विभावयिषति मिमावयिषति रिरावयिषति लिलावयिषतीत्यादिरूपसिद्धिरिति वाच्यम्। तद्दुरुपपादम्। णिचि परत्वादन्तरङ्गत्वाच्च वृद्ध्यादौ कृते द्वित्वे सत्यभ्यासे उवर्णस्य दुर्लभत्वादकारस्य 'सन्यतः' इतीत्वेन रूपसिद्धेश्च। ततो वर्गादिग्रहणं व्यर्थं सदुक्तार्थे ज्ञापकमिति भावः। ज्ञापनफलं तु यत्र 'ओः पुयण्जि–' इत्यस्याप्राप्तिस्तत्र बोध्यम्। तद्यथा। चुक्षावयिषति। चच्युक्षवत्। उद्दुरिवाचरति। उडवति। 'सर्वप्रातिपदिकेभ्यः–' इत्याचारे क्विप् तदन्ताद्धातोर्णौ सन्। उड्डावयिषति। चङि औड्डवत्। तु इति सौत्रो धातुस्ततो णौ सन्। तुतावयिषति। चङि अतूतवत्। नुनावयिषति। अनूनवत्। पुस्फारयिषति। अपुस्फुरत्। 'चिस्फुरोर्णौ' इति वात्वम्। अपुस्फरदित्यादिष्वभ्यासे उकारश्रवणं भवति ज्ञापनात्, अन्यथा चिक्षावयिषतीत्यादि प्रसज्येत। तदेतत्सकलमभिप्रेत्य वार्तिककृतोक्तम् 'ओः पुयण्जिषु वचनं ज्ञापकं णौ स्थानिवद्भावस्य' इति। स्थानिवद्भावः प्रतिषेधस्याप्युपलक्षणम्। **अच आदेशो न स्यादिति**। प्रतिषेधपक्षो मुख्य इत्यभिप्रेत्येदमुक्तम्। प्रतिषेधः स्थानिवद्भावस्याप्युपलक्षणमिति बोध्यम्। नन्वेवं कृत संशब्दन इति धातोर्णौ चङि इरादेशात्प्रागेव कृत इत्यस्य द्वित्वे उरदत्वे च अचकीर्तदिति स्यान्न तु अचिकीर्तदित्यत आह—**यत्र द्विरुक्ताविति** ॥—**आद्योजिति**। चङ्सहितस्योत्तरखण्डत्वमभ्युपेत्येदमुक्तम्। अन्ये तु आद्यग्रहणं स्पष्टप्रतिपत्त्यर्थं धातोरवयवस्यैकाचो

रूपे वाऽवर्णो लभ्यते तत्रैवायं निषेधः । ज्ञापकस्य सजातीयापेक्षत्वात् । तेनाचिकीर्तदिति सिद्धम् । प्रकृते तु नशब्दस्य द्वित्वं तत उत्तरखण्डेऽल्लोपः । औननत् । माभवानूननत् । १८९० ध्वन शब्दे । अदध्वनत् । १८९१ कूट परितापे। परिदाहे इत्यन्ये। १८९२ सङ्केत १८९३ ग्राम १८९४ कुण १८९५ गुण चामन्त्रणे । चात्कूटोऽपि । कूटयति । सङ्केतयति । ग्रामयति । कुणयति । गुणयति । पाठान्तरम् । १८९६ केत श्रावणे निमन्त्रणे च । केतयति । अभिकेतयति । कुण गुण चामन्त्रणे । चकारात्केत । १८९७ कूण सङ्कोचने इति । १८९८ स्तेन चौर्ये ॥ अतिस्तेनत् ॥

आ गर्वादात्मनेपदिनः ॥ १८९९ पद गतौ । पदयते । अपपदत । १९०० गृह ग्रहणे । गृहयते । १९०१ मृग अन्वेषणे । मृगयते । मृग्यतीति कण्ड्वादिः । १९०२ कुह विस्मापने । १९०३ शूर १९०४ वीर विक्रान्तौ । १९०५ स्थूल परिबृंहणे । स्थूलयते । अतुस्थूलत । १९०६ अर्थ उपयाच्ञायाम् । अर्थयते । आर्तथत । १९०७ सत्र सन्तानक्रियायाम् । अससत्रत । अनेकाच्त्वान्न षोपदेशः । सिसत्रयिषते । १९०८ गर्व

द्वित्वे सत्यभ्यासोत्तरखण्डे अज्द्वयासंभवादित्याहुः । औजढत् औननदित्यादौ परिनिष्ठिते अवर्णस्यालाभादाह—**प्रक्रियायामिति** । चुक्षावयिषतीत्यादौ प्रक्रियायामवर्णो न लभ्यते इत्याह—**परिनिष्ठिते रूपे वेति** । वाशब्दोऽनास्थायां क्वचिदवर्णपरत्वं विवक्षितं न तु अमुकत्रैवेत्याग्रह इति भावः ॥—**सजातीयापेक्षत्वादिति** । पुयण्जीत्यभ्यासोत्तरखण्डे अवर्णपरा भवन्ति । अतस्तथैव ज्ञापकमित्यर्थः । अत एव भाष्यकृता पवर्गादेरन्यस्मिन्नपि हलि अवर्णपरे एव स्थानिवत्त्वमिति अचिकीर्तदित्यादौ नातिव्याप्तिरिति सिद्धान्तितम् । ननु 'ओः पुयण्जि–' इति सूत्रे णिचि इति नास्ति तथा च णिच्यच आदेशो न स्यादित्यर्थे कथमिदं ज्ञापकं भवेत् । न च सामान्यतो द्वित्वे कार्ये अच आदेशो न स्यादित्येव ज्ञाप्यतामिति वाच्यम् । दिदवनीयिषति निनवयिषतीत्यादावभ्यासे उकारश्रवणप्रसङ्गादिति चेत् । अत्राहुः । येन नाव्यवधानमित्येकेन प्रत्ययेन द्वित्वनिमित्तप्रत्ययस्य व्यवधानमाश्रीयते । तच्च णेरेव संभवतीति णिज्विषयकमेव ज्ञापकं, दिदवनीयिषतीत्यत्र तु ल्युटा क्यचा व्यवधानादनेकव्यवधानमिति न तद्विषयकं ज्ञापनमिति । अस्मिन् मते आचारक्विबन्ताद्दवनशब्दात्सनि दुदवनिषतीति स्यात्, तच्च नेष्यते, णौ स्थानिवद्भावस्य ज्ञापकमिति वार्तिकोक्तेः । स्थानिवत्त्वेन प्रतिषेधेन वा णावेवाभ्यासे उकारेण भवितव्यम् । अतो वार्तिककारवचनादेव णौ स्थानिवदिति स्वीकर्तव्यम् । तथा च ना पूर्वोदाहरणेषु दोष इति दिक् । फलितमाह—**प्रकृते त्विति** ॥—**औननदिति** । 'नोनयति ध्वनयति–' इति चङ्निषेधस्त्विह न । तत्र छन्दसीत्यनुवृत्त्या 'मा त्वावतो जरितुः काममूनयीः' इत्यादावेव तन्निषेधात् । यद्यपि परिनिष्ठित एवावर्णपरत्वमित्याशयेन उवर्णादेश एव स्थानिवत्स्यान्नान्य इति वदतां वोपदेवादीनां मते औनिनदित्येव भाव्यम् । अवर्णादेशस्य स्थानिवत्त्वे तु परिनिष्ठितरूपे अवर्णपरत्वालाभात्तथापि अचिकीर्तदित्यादौ स्थानिवत्त्वमाशङ्क्य उत्तरभागे अवर्णाभावादिति भाष्यकारोक्तपरिहारपर्यालोचनया उवर्णादेश एव स्थानिवदिति नियमो नास्तीत्यौननदिति रूपं निर्बाधमेव । किं च उवर्णादेश एवेति नियमे 'लोपः पिबतेरीच्चाभ्यासस्य' इति सूत्रे अपीप्यदित्यत्र पिबतेर्णौ 'शाच्छासा–' इत्यादिना युकि चङि उपधालोपे तस्य स्थानिवत्त्वात्पाप्शब्दस्य द्वित्वमिति वृत्तिग्रन्थो विरुध्येत । अपि च 'शुष्किका शुष्कजङ्घा च क्षामिमानौजढत्तथा' इति वैयाघ्रपद्यवार्तिकस्य औजढदिति प्रयोगोऽपि विरुध्येत । एतद्धि पूर्वत्रासिद्धमित्यस्य प्रयोजनकथनवार्तिकम् । तद्यथा । शुष्किकेत्यत्र तु 'उदीचामातः–' इतीत्वविकल्पो न । 'शुषः कः' इति कत्वस्यासिद्धत्वेन यकपूर्वत्वाभावात् । शुष्कजङ्घेत्यत्र कत्वस्यासिद्धत्वादेव 'न कोपधायाः' इति पुंवद्भावनिषेधो न । क्षामिमानित्यत्र तु 'मादुपधाया–' इति वत्वं न । 'क्षायो मः' इति मत्वस्यासिद्धत्वात् । वहेः क्तान्ताण्णिचि चङि औजढदित्यत्र ढत्वस्यासिद्धत्वाण्णौ कृतस्य टिलोपस्य स्थानिवत्त्वाच्च हतशब्दस्य द्वित्वं 'कुहोश्चुः' 'अभ्यासे चर्च' सन्वदित्वं तु अनग्लोपीति प्रतिषेधान्न भवति । एवं काशिकायामपि 'पूर्वत्रासिद्धम्' इति सूत्रे औजढदित्युदाहृत्य ऊढिमाख्यदौजिढदित्येतत्तु क्तिन्नन्तस्य ऊढिशब्दस्य भवतीत्युक्तं तदपि विरुध्येत । उवर्णादेश एव स्थानिवदिति नियमे णौ कृतस्य टिलोपस्यात्र स्थानिवत्त्वाभावेन हतशब्दस्य हतिशब्दस्य वा द्वित्वासंभवात् । एवं चाङ्कधातोर्णिच्यलोपे चङि स्थानिवत्त्वात्कशब्दस्य द्वित्वे आञ्चकदिति रूपमेव सर्वसंमतं न त्वाञ्चिकदिति वोपदेवोक्तमिति बोध्यम् । नन्वचिकीर्तदित्यादौ स्थानिवत्त्वमाशङ्क्योत्तरभागे अवर्णाभावादिति वदन्भाष्यकारो न वोपदेवग्रन्थस्य प्रतिकूलः । उत्तरभागे परिनिष्ठितरूपे अवर्णपरत्वमुवर्णादेशस्यैव संभवति नान्यस्येत्याशयेनैव भाष्यकारेण तथोक्तमिति वक्तुं शक्यत्वादिति चेत् । मैवम् । तथा हि सति यत्र 'ओः पुयण्जि–' इत्यस्याप्राप्तिस्तत्राप्युवर्णादेश एव स्थानिवज्ज्ञापकस्य सजातीयापेक्षत्वादित्येवमेव भाष्यकारो वदेत् । ऋजुमार्गेण सिध्यतोऽर्थस्य वक्रेण साधनायोगादिति दिक् । संकेतिताश्चत्वारोऽत्र धातवः ॥—**पाठान्तरमिति** । संकोचन इत्येतत्पर्यन्तम् । अनेकाच्त्वेनाषोपदेशत्वात्षत्वं नेति ध्वनयति—**अतिस्तेनदिति** ॥—**गृहयते इति** । अल्लोपस्य स्थानिवत्त्वान्न गुणः । लुङि अजगृहत् । अग्लोपान्न सन्वद्भावः ॥—**मृगयते इति** । मार्गयति । मार्गतीति तु मार्ग अन्वेषण इत्याधृषीयस्य । **अर्थ** ॥—**अर्थयत**

माने ॥ गर्वयते । अदन्तत्वसामर्थ्याण्णिज्विकल्पः । धातोरन्त उदात्तो लिव्याम् च फलम् । एवमग्रेऽपि । इत्यागर्वीयाः ॥

१९०९ सूत्र वेष्टने । सूत्रयति । असुसूत्रत् । १९१० मूत्र प्रस्रवणे । मूत्रयति । मूत्रति । १९११ रूक्ष पारुष्ये । १९१२ पार १९१३ तीर कर्मसमाप्तौ । अपपारत् । अतितीरत् । १९१४ पुट संसर्गे । पुटयति । १९१५ धेक्क दर्शन इत्येके । अदिधेकत् । १९१६ कत्र शैथिल्ये । कत्रयति । कत्रति । कर्तेत्यप्येके । कर्तयति । कर्तति ॥ (ग) **प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च** ॥ प्रातिपदिकाद्धात्वर्थे णिच् स्यादिष्टे यथा प्रातिपदिकस्य पुंवद्भाव-रभाव-टिलोप-विन्मतुब्लोप-यणादिलोप-प्रस्थ-स्फाद्यादेश-भसंज्ञास्तद्वण्णावपि स्युः । पटुमाचष्टे पटयति । परत्वाद्वृद्धौ सत्यां टिलोपः । अपीपटत् । 'णौ चङि–२३१४' इत्यत्र भाष्ये तु वृद्धेर्लोपो बलीयानिति स्थितम् । अपपटत् ॥ (ग) **तत्करोति तदाचष्टे** ॥ पूर्वस्य प्रपञ्चः । करोत्याचष्ट इति धात्वर्थमात्रं णिजर्थः ॥

---

इति । 'वृद्धेर्लोपो बलीयान्' इत्यल्लोपान्न वृद्धिः । बोपदेवस्तु वृद्धौ कृतायां पुकि चाऽर्थापयते इति रूपमाह तद्भ्रमसात् । न च 'अर्थवेदसत्यानाम्–' इत्यापुक् स्यादेवेति वाच्यम् । तत्र प्रातिपदिकस्य ग्रहणात् ॥—**अदन्तत्वसामर्थ्यादिति** । कथादिषूपधावृद्धिदीर्घसन्वद्भावविरहेण सारभामप्रभृतीनामुपधाह्रस्वस्य गृहमृगप्रभृतीनामुपधागुणस्य च व्यावर्तनेनादन्तत्वं सार्थकम् । इह त्वदन्तत्वे प्रागुक्तफलाभावाण्णिचः पाक्षिकत्वं ज्ञापयतीति भावः । ननु अदन्तत्वसार्थकत्वाय वाल्लोप इति प्राचोक्तमेवाभ्युपगम्यतामिति चेत् । अत्राहुः । चिन्तयतेरिदित्वं सामान्यापेक्षं ज्ञापकमिति मते इह अदन्तत्वस्य फलं स्पष्टमेव । विशेषापेक्षं ज्ञापकमिति मते तु तत्र तत्र आकार ईकार उकार ऊकाराश्चेत्यनुबन्धा यथा ज्ञापकतया स्वीकृताः तथा अदन्ततापि णिच्विकल्पमेव ज्ञापयतु, क्लृप्तेनैव णिज्विकल्पेन कृतार्थत्वे अपूर्वस्य लोपबाधस्य कल्पनाया अन्याय्यत्वात् । एवं हि सति मतद्वयेऽप्येकरूपमेव फलं लभ्यत इति ॥—**असुसूत्रदिति** । अनेकाच्त्वान्न षत्वम् ॥—**प्रातिपदिकादिति** । यदि सुबन्ताण्णिच् स्यात्तदा स्रजयतीत्यादौ कुत्वं स्यादिति भाव इति केचित् । तन्न । इष्ठवद्भावेन भत्वे कुत्वस्याप्रसक्तेः । अत्र बहुलं णिच् स्यात् । स च णिच् इष्ठवद्भवतीति अन्वयात्पक्षे वाक्यमपि भवतीत्याह—**पटुमाचष्ट इति** । धात्वर्थ इत्यनेन करणाख्यानादिर्गृह्यत इति भावः । ननु बहून्याचष्टे भावयतीत्यत्र 'इष्ठस्य यिट् च' इति णिचोऽपि यिट् स्यात् । अत्राहुः । टेरिति सूत्रे णाविष्ठवत्प्रातिपदिकस्येति वार्तिके प्रातिपदिकग्रहणं प्रत्ययकार्याणामतिदेशो माभूदित्येवमर्थम् । तेनात्र णिचोपीष्ण भवति तदभावे भूभावेनापि न भवितव्यं संनियोगशिष्टत्वात् । किंतु वक्ष्यतीत्येव भवितव्यमिति मतान्तरम् । एतच्च तत्रैव सूत्रे कैयटे स्पष्टमिति । अन्ये त्वाहुः । इष्ठवदिति हि सप्तम्यन्ताद्वतिर्णावित्युपमेये सप्तमीदर्शनात्तेन इष्ठनि परे पूर्वस्य यत्कार्यं तदतिदिश्यते न लिष्ठनोऽपीति ॥—**पुंवद्भावेति** । अतिशयेन पट्वी पटिष्ठेत्यत्र 'भस्याढे तद्धिते' इति पुंवद्भावः । क्रशिष्ठः द्रढिष्ठः इत्यत्र 'र ऋतो हलादेः–' इति रभावः । साधिष्ठ इत्यादौ टिलोपः । अतिशयेन स्रग्वी स्रजिष्ठ इत्यत्र 'विन्मतोर्लुक्' इति विनो लुक् । अतिशयेन गोमान् गविष्ठ इत्यादौ मतुपो लुक् । स्थविष्ठ इत्यादौ 'स्थूलदूर–' इत्यादिना यणादिलोपः । प्रेष्ठ इत्यादौ 'प्रियस्थिर–' इत्यादिना प्रस्थाद्यादेशः ॥—**तद्वण्णावपीति** । पुंवद्भावस्योदाहरणमेणीमाचष्टे एतयति । टिलोपेनैव सन्नियोगशिष्टत्वान्नकारनिवृत्तौ सिद्धायां पुंवद्भावग्रहणं दरदमाचष्टे दारदयतीत्यादिसिध्यर्थमिति बोध्यम् । द्रढयतीत्यादौ रभावः । स्रग्विणमाचष्टे स्रजयतीत्यत्र विनो लुक् । गोमन्तमाचष्टे गवयतीत्यत्र मतुपो लुक् । अङ्गवृत्तपरिभाषया वृद्धिरत्र न भवति । प्रियमाचष्टे प्रापयति । स्थिरमाचष्टे स्थापयतीत्यादौ तु वृद्धिर्भवत्येव । द्वयोरिति निर्देशेन तस्याः परिभाषाया अनित्यत्वज्ञापनादिति दिक् ॥—**परत्वाद्वृद्धाविति** । लोपः शब्दान्तरप्राप्त्याऽनित्यः । वृद्धिरप्यनित्या । उभयोरनित्ययोः परत्वाद्वृद्धिः । तस्यां कृतायामौकारस्यावादेशात्प्रागेव परत्वाद्वार्णादाङ्गस्य बलीयस्त्वाच्च लोप इत्यर्थः । एवं चानग्लोपित्वाद्दीर्घसन्वद्भावौ स्त इत्याह—**अपीपटदिति** । इह टिलोपस्य स्थानिवद्भावेन व्यवधानाद्दीर्घसन्वद्भावौ नेति न भ्रमितव्यम् । स्थानिवत्त्वेऽप्यङ्गस्य णिच्परत्वानपायात् । चङ्परे णौ यल्लघ्विति पक्षेऽपि अभ्यासस्य आदिष्टादचः पूर्वत्वेन स्थानिवत्त्वमेव नास्तीति दीर्घसन्वद्भावौ स्त एव । केचित्तु चङ्परे णौ यल्लघ्विति पक्षे पटुशब्दोकारस्य वृद्धौ कृतायां णिच्परं लघु दुर्लभमिति सन्वद्भावाप्राप्त्याऽपपटदित्येव रूपम् । प्रथमं टिलोपः पश्चाद्द्विर्वचनमिति मत्वा अभ्यासस्य आदिष्टादचः पूर्वत्वेन स्थानिवत्त्वमेव नास्तीति मनोरमोक्तं यत्, तन्नादर्तव्यम् । णिच्यच आदेशो न स्याद्द्वित्वे कर्तव्ये इति निषेधपक्षस्य मुख्यतया प्रागुक्तत्वेन प्रथमं टिलोपस्य दुरुपपादत्वादित्याहुस्तन्मन्दम् । अपीपटदित्यत्र द्वितीयाच्पर्यन्तस्य प्रथमावयवस्य द्वित्वमिति हि निर्विवादम् । तथाच द्वितीयस्याचो द्वित्वाकरणात्प्रथमं टिलोपः स्यादेवेति ॥—**वृद्धेर्लोप इति** । कृताकृतप्रसिमात्रेण लोपो नित्यः । वृद्धिस्त्वनित्या, टिलोपे सति स्थानिनः पूर्वत्र कर्तव्यायां लोपस्य स्थानिवत्त्वात्, स्वविधौ स्वस्य स्थानिवत्त्वाभावाच्च । अस्मिंस्तु पक्षे 'मुण्डमिश्र–' इति सूत्रे हलिकल्योरदन्तत्वनिपातनस्य वैयर्थ्यमेव । वृद्धेः प्राक् टिलोपे सति अग्लोपित्वसंभवात् । तथा चादन्तत्वनिपातनसामर्थ्याट्टिलोपात्पूर्वं वृद्धिरेवेत्यनग्लोपित्वादपीपटदित्येव रूपं साध्विति प्रतीयते । भाष्य-

लडर्थस्त्वविवक्षितः ॥ (ग) **तेनातिक्रामति** । अश्वेनातिक्रामति अश्वयति । हस्तिनातिक्रामति हस्तयति ॥ (ग) **धातुरूपं च** ॥ णिच्प्रकृतिर्धातुरूपं प्रतिपद्यते ॥ चशब्दोऽनुक्तसमुच्चयार्थः । तथा च वार्तिकम् ॥ ॐ **आख्यानात्कृतस्तदाचष्टे कृल्लुक्प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकमिति** । कंसवधमाचष्टे कंसं घातयति । इह कंसं हन् इ इति स्थिते ॥

२५७४ । **हनस्तोऽचिण्णलोः** ।७।३।३२। हन्तेस्तकारोऽन्तादेशः स्याच्चिण्णल्वर्जे ञिति णिति । नन्वत्राङ्गसंज्ञा धातुसंज्ञा च कंसविशिष्टस्य प्राप्ता । ततश्चाद्‌द्वित्वयोर्दोषः । किंच कुत्वतत्वे न स्याताम् । धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात् । सत्यम् । प्रकृतिवच्चेति चकारो भिन्नक्रमः । कारकं च चात्कार्यम् । हेतुमण्णिचः प्रकृतेर्हेन्यादेर्हेतुमण्णौ यादृशं कारकं धातावनन्तर्भूतं द्वितीयान्तं यादृशं च कार्यं कुत्वतत्वादि तदिहापीत्यर्थः । कंसमजीघतत् । (ग) **कर्तृकरणाद्धात्वर्थे** ॥ कर्तुर्व्यापारार्थं यत्करणं न तु चक्षुरादिमात्रमित्यर्थः । असिना हन्ति असयति । १९१७ **वल्क** दर्शने । १९१८ **चित्र** चित्रीकरणे । आलेख्यकरण इत्यर्थः । कदाचिद्दर्शने । चित्रेत्ययमद्भुतदर्शने णिचं लभते । चित्रयति । १९१९ **अंस** समाघाते । १९२० **वट** विभाजने । १९२१ **लज** प्रकाशने ॥ **वटि लजि** इत्येके । वाण्टयति । लञ्जयति । अदन्तेषु पाठबलाददन्तत्वे वृद्धिरित्यन्ये । वण्टापयति । लञ्जापयति । शाकटायनस्तु कथादीनां सर्वेषां पुकमाह । तन्मते कथापयति । गणापयतीत्यादि । १९२२ **मिश्र** सम्पर्के । १९२३ **संग्राम** युद्धे । अयमनुदात्तेत् अकारप्रश्लेषात् । अससंग्रामत । १९२४ **स्तोम** श्लाघायाम् । अतुस्तोमत् । १९२५ **छिद्र** कर्णभेदने । करणभेदन इत्यन्ये । **कर्णेति** धात्वन्तरमित्यन्ये । १९२६ **अन्ध** दृष्ट्युपघाते । उपसंहार इत्यन्ये । आन्दधत् । १९२७ **दण्ड** दण्डनिपातने । १९२८ **अङ्क** पदे लक्षणे च । आञ्चकत् । १९२९ **अङ्ग** च । आञ्ज-

---

द्वयप्रामाण्याद्रूपद्वयमपि साध्विति बहवः ॥—**लडर्थस्त्विति** । करोत्याचष्टे इति हि कर्तरि वर्तमाने लडेकवचनम् । लडर्थाविवक्षायां तु ण्यन्ताद्भावकर्मणोः भूतभविष्यतोर्द्वित्वबहुत्वयोश्च प्रत्ययो भवत्येवेति भावः । यद्यप्येकत्वादिसंख्या लडर्थो न भवति तथापि लडादेशतिङर्थोऽपीह लडर्थत्वेन गृहीत इति ज्ञेयम् ॥—**तेनातिक्रामति** । तृतीयाप्रकृतिभूतात्प्रातिपदिकाण्णिच् । तृतीयान्ताण्णिजित्यन्ये । एवं तत्करोतीत्यत्रापि द्वितीयाप्रकृतिभूताद्द्वितीयान्ताद्वा णिच् । न च सुबन्ताण्णिचि वाचं करोत्याचष्टे वाचाऽतिक्रामति वा वाचयतीत्यत्र कुत्वं स्यादिति शङ्क्यम् । इष्ठवद्भावेन भसंज्ञया पदसंज्ञाया बाधात् । यशस्विनमाचष्टे यशसयति स्रग्विणमाचष्टे स्रजयतीत्यादौ विनो लुकि प्राप्तस्य पदकार्यस्य बाधार्थं भसंज्ञातिदेशस्यावश्यकत्वात् 'तत्करोति–' इत्यादिनिर्देशानुगुणत्वाच्च सुबन्ताण्णिजिति पक्ष एव ज्यायानित्याहुः ॥—**णिच्प्रकृतिरिति** । वधशब्दो णिच्प्रकृतिरिदानीं तु कृल्लुक्यवशिष्टभाग एव प्रकृतिरित्यर्थः ॥—**आख्यानात्कृत इति** । यद्यपि वधशब्दः कृदन्तः स आख्यानं न भवति तथाप्याख्यानवाची कृदन्तश्च कंसवधशब्दो भवत्येव कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात् ॥—**कृल्लुगिति** । 'हनश्च वधः' इति विहितस्य अप्प्रत्ययस्य लुक् ॥—**प्रकृतिप्रत्यापत्तिरिति** । विकारपरित्यागेन स्वरूपेणावस्थितिरित्यर्थस्तदेतत्सकलमभिप्रेत्याह—**कंसं हन् इ इति स्थिते इति** ॥—**कंसविशिष्टस्येति** । तस्मादेव णिचो विधानादिति भावः । **दोष इति** । कशब्दात्पूर्वमडागमः कंस इत्यस्य द्विर्वचनं स्यादित्यर्थः ॥—**किंचेति**। एवं च कंसमजीघनदितीष्टं न सिध्येदिति भावः॥—**तत्प्रत्यये** धातोर्विहितप्रत्यये । तेन वार्त्रघ्नमित्यत्र 'हनस्तः'इति तत्वं न भवतीति ज्ञेयम् । उक्तदोषान्परिहरति—**सत्यमिति** । प्रकृतिवच्चेति चकारोऽनुक्तसंग्रहार्थ इत्याह—**चात्कार्यमिति** । यद्यप्यन्यतरातिदेशेनाप्यट्‌द्विर्वचने सिध्यतः, तथापि धातावनन्तर्भूतद्वितीयान्तादिलाभाय कारकातिदेशः । कार्यातिदेशस्तु कुत्वतत्वादिलाभायेति विवेकः । इह भारतभागवतादिप्रसिद्धे कंसवधाद्युपाख्याने एव णिजिति नाग्रहः किं तूपाख्यानमात्रे । तेन राजागमनमाचष्टे राजानमागमयतीत्यादि सिध्यति । इह कृत्प्रकृतौ राज्ञः कर्तृत्वेऽपि गमेर्हेतुमण्णौ 'गतिबुद्धि–' इत्यनेन तस्य कर्मत्वमिति द्वितीयान्तमेव रूपातिदेशबलात्स्वीक्रियते । देवदत्तपाकमाचष्टे देवदत्तेन पाचयतीत्यत्र तु देवदत्तस्य कर्तृत्वानपायात्तृतीयैव भवति । रुक्मिणीहरणमाचष्टे इत्यादौ 'हृक्रोरन्यतरस्याम्' इति विकल्पात् रुक्मिणीं रुक्मिण्या वा हारयतीति प्रयोगः ॥—**कर्तृकरणादिति** । कर्तृग्रहणाभावे चक्षुषा पश्यति चक्षयतीत्यादावेव स्यान्न तु करिभिरववध्नाति अवकरयतीत्यादौ । लोके इन्द्रियाणामेव करणत्वेन सुप्रसिद्धत्वात्, अतस्तत्संग्रहार्थं कर्तृग्रहणमिति मनोरमायां स्थितम् । नव्यास्तु साधकतमत्वेन विवक्षितं यत् तत्करणशब्देन गृह्यते न तु लोकप्रसिद्धकरणमेव । अन्यथा 'कर्तृकरणयोस्तृतीया' इत्यादावपि लोकप्रसिद्धकरणग्रहणप्रसक्त्या बाणेन हत इत्यादि रूपं न सिध्येत् । तथा च कर्तृग्रहणं विनाप्यवकरयतीति रूपसिद्धौ न किंचिद्बाधकमिति व्याख्याय कर्तृकरणादित्यत्र समाहारद्वन्द्वं मत्वा देवदत्तेन पाचयति देवदत्तयतीत्युदाजह्रुः । **कदाचिद्दर्शने** । चित्रकरणकदाचिद्दर्शनयोरिति सुवचम् ॥—**अदन्तेषु पाठबलादिति** । अदन्तस्य फलान्तराभावादतोलोपं बाधित्वा वृद्धिरित्यर्थः । **संग्राम** । संग्रामेति युद्धवाचि प्रातिपदिकं करोत्यर्थे णिचं लभते ॥—**अनुदात्तेदिति** । एतच्च 'भृशादिभ्यो भुवि–' इति सूत्रे कैयटेनोक्तम् ॥—**अकारप्रश्लेषादिति** । तेन

गत्। १९३० सुख १९३१ दुःख तत्क्रियायाम्। १९३२ रस आस्वादनस्नेहनयोः। १९३३ व्यय वित्तसमुत्सर्गे। अवव्ययत्। १९३४ रूप रूपक्रियायाम्। रूपस्य दर्शनं करणं वा रूपक्रिया। १९३५ छेद द्वैधीकरणे। अचिच्छेदत्। १९३६ छद अपवारण इत्येके। छादयति। १९३७ लाभ प्रेरणे। १९३८ व्रण गात्रविचूर्णने। १९३९ वर्ण वर्णक्रियाविस्तारगुणवचनेषु। वर्णक्रिया वर्णकरणम्। सुवर्णं वर्णयति। कथां वर्णयति। विस्तृणातीत्यर्थः। हरिं वर्णयति। स्तौतीत्यर्थः। बहुलमेतन्निदर्शनम्। अदन्तधातुनिदर्शनमित्यर्थः। बाहुलकादन्येऽपि बोध्याः॥ तद्यथा। १९४० पर्ण हरितभावे। अपपर्णत्। १९४१ विष्क दर्शने। १९४२ क्षिप प्रेरणे। १९४३ वस निवासे। १९४४ तुत्थ आवरणे॥ एवमान्दोलयति। प्रेङ्खोलयति। विडम्बयति। अवधीरयतीत्यादि। अन्ये तु दशगणीपाठो बहुलमित्याहुः। तेनापठिता अपि सौत्रलौकिकवैदिका बोध्याः। अपरे तु नवगणीपाठो बहुलमित्याहुः। तेनापठितेभ्योऽपि क्वचित्स्वार्थे णिच्। रामो राज्यमचीकरदिति यथेत्याहुः। चुरादिभ्य एव बहुलं णिजित्यर्थ इत्यन्ये। सर्वे पक्षाः प्राचां ग्रन्थे स्थिताः॥ (ग) णिङङ्गान्निरसने॥ अङ्गवाचिनः प्रातिपदिकान्निरसनेऽर्थे णिङ् स्यात्। हस्तौ निरस्यति हस्तयते। पादयते॥ (ग) श्वेताश्वाश्वतरगालोडिताह्वरकाणामश्वतरेतकलोपश्च॥ श्वेताश्वादीनां चतुर्णामश्वादयो लुप्यन्ते णिङ् च धात्वर्थे। श्वेताश्वमाचष्टे तेनातिक्रामति वा श्वेतयते। अश्वतरमाचष्टेऽश्वयते। गालोडितं वाचां विमर्शः, तत्करोति गालोडयते। आह्वरयते। केचित्तु णिचमेवानुवर्तयन्ति तन्मते परस्मैपदमपि॥ (ग) पुच्छादिषु धात्वर्थ इत्येव सिद्धम्॥ णिजन्तादेव बहुलवचनादात्मनेपदमस्तु। मास्तु 'पुच्छभाण्ड–२६७६' इति णिङ्विधिः। सिद्धशब्दो ग्रन्थान्ते मङ्गलार्थः॥ इति चुरादयः॥

---

## तिङन्ते ण्यन्तप्रक्रिया ५१।

२५७५। तत्प्रयोजको हेतुश्च ।१।४।५५। कर्तुः प्रयोजको हेतुसंज्ञः कर्तृसंज्ञश्च स्यात्॥

२५७६। हेतुमति च ।३।१।२६। प्रयोजकव्यापारे प्रेषणादौ वाच्ये धातोर्णिच् स्यात्। भवन्तं प्रेरयति भावयति। 'णिचश्च–२५६४' इति कर्तृगे फले आत्मनेपदम्। भावयते। भावयांबभूव॥

२५७७। ओः पुयण्ज्यपरे ।७।४।८०। सनि परे

---

प्रश्लिष्टस्येत्संज्ञा प्रकृत्यकारस्य तु इष्टवदिति टिलोपः। तथा च अग्लोपादसंग्रामतेत्यत्र नोपधाह्रस्वः। सुख दुःख। तच्छब्देन सुखदुःखे प्रातिपदिकार्थौ परामृश्येते। प्रातिपदिकाद्धात्वर्थे इत्येव सिद्धे अनयोः पाठः सोपसर्गात्प्रत्ययार्थ इत्येके। सुखदुःखाभ्यां तत्क्रियायामेव णिच् स्यान्न त्वाचष्ट इत्यस्मिन्नर्थे इत्येतदर्थः पाठ इत्यन्ये॥—पुच्छादिष्विति। भीमसेनस्य वाक्यम्॥—ग्रन्थान्त इति। भू सत्तायामित्यादिधातुपाठस्यान्त इत्यर्थः॥ इति चुरादयः॥

तत्प्रयोजको हेतुश्च॥ तच्छब्देन 'स्वतन्त्रः कर्ता' इति पूर्वसूत्रोपात्तः कर्ता परामृश्यते। तस्य कर्तुः प्रयोजकः प्रेरकः, तद्व्यापारानुकूलव्यापारवानित्यर्थः। चकारः एकसंज्ञाधिकारबाधनार्थस्तदाह—हेतुसंज्ञः कर्तृसंज्ञश्चेति। हेतुसंज्ञायाः प्रयोजनं 'भीस्म्योर्हेतुभये' 'भियो हेतुभये षुक्' इत्यादौ प्रयोजकस्य हेतुत्वेन व्यवहारः। कर्तृसंज्ञायास्तु 'लः कर्मणि च भावे च–' इति सूत्रेण प्रयोजके वाच्ये लकारादयः॥—हेतुमति च। स्वनिष्ठाधारतानिरूपिताधेयतासंबन्धेन हेतुर्यत्रास्ति स हेतुमान्व्यापारः तस्मिन्वाच्ये णिजित्याहुः॥—प्रयोजकव्यापार इति। प्रयोजकश्चेतनाचेतनसाधारण्येन विवक्षितः स च क्वचित्सिद्धः क्वचित्फलरूपः। देवदत्तः पाचयति गमयतीत्यादौ सिद्धः। भिक्षा वासयति संग्रामो वासयतीत्यादौ तु फलरूपः॥—प्रेषणादाविति। भृत्यादेर्निकृष्टस्य प्रवर्तना प्रेषणा। आज्ञेत्यर्थः। आदिशब्देनाध्येषणानुमत्यादीनामुपादानम्। समानस्याधिकस्य वा ऋत्विगाचार्यादेः प्रवर्तना अध्येषणम्। प्रार्थनेत्यर्थः। अनुमतिस्तु राजादेः संमतिः, तां विना यागादिक्रिया न निष्पद्यत इत्यनुमतिमात्रेण राजादिः प्रयोजकः। अनुमत्यादीत्यादिशब्देनात्रोपदेशानुग्रहयोरुपादानम्। ज्वरितः कषायं पिबेदित्युपदेशमात्रेण वैद्यादिः प्रयोजकः। यस्तु केनचिद्धन्तुमिष्टं पलायमानं निरुणद्धि सोऽपि हन्तुरनुग्राहकत्वेन प्रयोजकः। सर्वेऽप्येते विशेषाः कथं णिच्प्रत्ययगम्या इति चेत्। अत्राहुः। सर्वानुगतं प्रवर्तनासामान्यं णिचोऽर्थः, विशेषास्त्वर्थप्रकरणादिगम्या इति। नन्वेवं णिचो लोडादीनां च पर्यायता स्यात्ततश्च इदानीं पृच्छतु भवानिति वक्तव्ये प्रच्छयतीति णिजपि प्रयुज्येतेति चेत्। मैवम्। कर्तुः प्रयोजको हि हेतुः प्रैषविषयो यः संबोध्यो देवदत्तादिः स तु नाद्यापि प्रश्नकर्तृत्वेनावधारितः। तथा च प्रयोज्यप्रवृत्त्युपहिता या प्रयोजकनिष्ठप्रवृत्तिः सा णिजर्थस्तदनुपहिता प्रयोजकप्रवृत्तिस्तु लोडर्थ इत्युभयोर्भेदः। उक्तं च—'द्रव्यमात्रस्य तु प्रैषे पृच्छादेर्लोङ् विधीयते। सक्रियस्य प्रयोगस्तु यदा स विषयो णिचः' इति। अस्यार्थः—कर्तृत्वेनानवधारितस्य देवदत्तादेस्तु प्रैषे प्रच्छ ज्ञीप्सायामित्यादेर्लोट् भवति। प्रयोज्यप्रवृत्त्युपहितप्रवृत्त्याश्रयस्य प्रयुक्तिस्तु यदा स्यात्तदा णिचो विषय इति। किं च प्रयोक्तृनिष्ठा प्रयुक्तिर्लोडर्थः प्रयोज्यप्रयोक्तृकर्तृका तु णिजर्थः। पच देवदत्तेत्यत्र हि वक्तैव प्रेरकः। पाचयतीत्यादौ वक्तृभिन्नः पाचयामीत्यादौ तु वक्तेति दिक्॥—ओः पुयण्जि—। पुयण्जीति समाहारद्वन्द्वात्सप्तम्येकवचनम्। अपर इति बहुव्रीहिः।

अण्डजः क्षीणपुण्यश्च । सृणिरङ्कुशश्चन्द्रः सूर्यो वायुश्च । वृशः आर्द्रकं मूलकं च । मत्स्यः । पण्ढः । डित्वाट्टिलोपः । नमतीति नटः शैलूषः । बिभर्ति भरटः कुलालो भृतकश्च । ५५५ । अन्येभ्योऽपि दृश्यन्ते ॥ पेत्वममृतम् भृशम् । ५५६ । कुसेरुम्भोमेदेताः ॥ कुसुम्भम् । कुसुमम् । कुसीदम् । कुसितो जनपदः । ५५७ । सानसिवर्णसिपर्णसितण्डुलाङ्कुशचषालेल्वलपल्वलधिष्ण्यशल्याः ॥ सनोतेरसिप्रत्यय उपधावृद्धिः । सानसिर्हिरण्यम् । वृञो नुक् च । वर्णसिर्जलम् । पॄ पर्णसिर्जलग्रहणम् । तड आघाते तण्डुलाः । अकि लक्षणे उशच् । अङ्कुशः । चषेरालच् । चषालो यूपकटकः । इल्वलो दैत्यभेदः । पल्वलम् । जिष्णुपा । ऋकारस्य इकारः । धिष्ण्यम् । शलेर्यः शल्यम् । वा पुंसि शल्यं शङ्कुर्ना । ५५८ । मूशक्यविभ्यः क्लः ॥ मूलम् । शक्लः प्रियंवदे । अम्बलो रसः । बाहुलकादमेः । अम्लः । ५५९ । माछाससिभ्यो यः ॥ माया । छाया । सस्यम् । बाहुलकात्सुनोतेः । सव्यं दक्षिणवामयोः । ५६० । जनेर्यक् ॥ 'ये विभाषा २३१९' । जन्यं युद्धम् । जाया भार्या । ५६१ । अघ्न्यादयश्च ॥ यगन्ता निपात्यन्ते । हन्तेर्युक् अडागम उपधालोपश्च । अघ्न्या माहेयी । अघ्न्यः प्रजापतिः । कनी दीप्तौ । कन्या । बवयोरैक्यम् । वन्ध्या ।

वृद्धिः ॥—सृणिरिति—। क्निः कित्त्वान्न गुणः नित्त्वं तु आद्युदात्तार्थम् । 'सृवृषिभ्यां कित्' इति निप्रत्यये त्वन्तोदात्तः साधितः ॥—वृश इति । शकः कित्त्वान्न गुणः ॥—मत्स्य इति । स्यप्रत्यये चर्त्वेन दस्य तः । अन्तोदात्तोऽयम् । 'ऋतन्यञ्जि—' इति सूत्रे तु आद्युदात्तः साधितः ॥—षण्ढ इति । बाहुलकाद्धात्वादेः षस्य सकारो न प्रत्ययादेः । ढस्य तु प्रयोजनाभावान्नेत्संज्ञा । 'शमेर्ढः' इति सूत्रे तु तालव्यादिः साधितः । 'सायं सायो भवेत्कोशः कोषः षण्डश्च शण्डवत्' इति द्विरूपकोशः । 'षण्ढो वर्षवरः' इत्यमरः । 'नटी नल्यौषधौ स्त्री स्याच्छैलूषाशोकयोः पुमान्' इति मेदिनी ॥—नट इति । नमतेर्डट् ॥—भरट इति । बिभर्तेरटच् ॥—अन्येभ्योऽपि—। इत्यनादयोऽनुवर्तन्ते ॥—पेत्वमिति । पा पानेऽस्मादित्वन् ॥—भृशमिति—। भृशः शक् ॥—कुसेः—। कुस श्लेषणेऽस्मादुम्भ उम ईद इत एते प्रत्ययाः स्युः । 'कुसुम्भं हेमनि महारजने ना कमण्डलौ' इति मेदिनी । 'कुसुमं स्त्रीरजोनेत्ररोगयोः फलपुष्पयोः' इति च । 'कुसीदं जीवने वृद्ध्या क्लीवं त्रिषु कुसीदके' इति च । इह सूत्रे तृतीयो ह्रस्वादिर्दीर्घादिश्च तन्त्रेणोपात्तः । 'वृषाकप्यग्नि' इति सूत्रे ह्रस्वादिरेवेति वृत्तिकारहरदत्तादिग्रन्थोपष्टम्भेन निर्णीतम् । 'पारलौकिककुसीदमसीदत्' इति श्रीहर्षप्रयोगात्तु दीर्घादिरपि ॥—सानसि—॥—सनोतेरिति । षणु दाने ॥—वृञो नुक् च इति । वृञ् वरणेऽस्मादसिः । दशपाद्यां तु 'सानसिधर्णसि—' इति पठित्वा धृञो नुक् च धर्णसिर्लोकपाल इति व्याख्यातम् । युक्तं चैतत् । 'धर्णसिं भूरिधायसम्' इत्यादिमन्त्रानुगुणत्वात् ॥—पर्णसिरिति । पॄ पालनपूरणयोरस्मादसिप्रत्ययो नुक् च ॥—तण्डुला इति । उलच्प्रत्ययो नुमागमश्च धातोः । त्रेधा तण्डुलान्विभजेत् । इह चित्स्वरः । 'तण्डुलः स्याद्विडङ्गे च धान्यादिनिकरे पुमान्' इति मेदिनी ॥—अङ्कुश इति । अयमपि चित्स्वरेणान्तोदात्तः । तथाच मन्त्रः 'दीर्घं ह्यङ्कुशं यथा' इति । 'अङ्कुशोऽस्त्री सृणिः स्त्रियाम्' इत्यमरः ॥—चषेराल इति । चष भक्षणे प्रत्ययस्वरेणाद्युदात्तः । उज्ज्वलदत्तस्त्वालजिति चितमाह । तन्न । 'चषालं ये अश्वयूपाय तक्षति' । 'चषालवन्तः स्वरवः पृथिव्याम्' इत्यादौ चित्स्वरादर्शनात् । अमरोक्तिमाह—चषाल इति ॥—इल्वल इति । इल स्वप्नप्रेरणयोः । वलच् गुणाभावः । 'इल्वला तारका राजभेदे ना दैत्यमत्स्ययोः' इति मेदिनी । 'इल्वलास्तच्छिरोदेशे तारका निवसन्ति याः' इत्यमरः । पा पाने अस्माद्वलच् लुगागमः ह्रस्वत्वं च । पिबन्त्यस्मिन्निति पल्वलमल्पसरः । 'वेशन्तः पल्वलं चाल्पसरः' इत्यमरः ॥—इकार इति । रपरत्वाभावो ण्यप्रत्ययश्चेति बोध्यम् । 'धिष्ण्यं स्थाने गृहे भेऽग्नौ' इत्यमरः । 'धिष्ण्यं स्थानाग्निसद्मसु । ऋक्षे शक्तौ च' इति मेदिनी ॥—शलेः—। शल गतौ । 'शल्यं तु न स्त्रियां शङ्कौ क्लीवं क्ष्वेडेषु तोमरे । मदनद्रुश्वाविधोर्ना' इति मेदिनी ॥—मूशकि—। मूङ् बन्धने शक्लृ शक्तौ, अबि शब्दे । 'मूलं शिफाद्ययोः । मूलं वित्तेऽन्तिके' इति मेदिनी । 'शक्लः प्रियंवदे' इति विशेष्यनिघ्नेऽमरः । अमेरिति । अम रोगे चुरादिण्यन्तः । बाहुलकादेव वोपधाह्रस्वः । 'अम्लो रसविशेषे स्यादम्ला चाङ्गेरिकौषधौ' इति मेदिनी ॥—माछा—। मा माने, छो छेदने, षस स्वप्ने । 'माया स्याच्छाम्बरीबुद्ध्योर्मायः पीताम्बरे सुरे' इति मेदिनी । 'छाया स्यादातपाभावे प्रतिबिम्बार्कयोषितोः । पालनोत्कोचयोः कान्तिसच्छोभापङ्क्तिषु स्त्रियाम्' इति विश्वमेदिन्यौ । 'वृक्षादीनां फलं सस्यम्' इत्यमरः ॥—सुनोतेरिति । षुञ् अभिषवे, 'सव्यं वामे प्रतीपे च' इति मेदिनी ॥—जनेः । जन जनने । यकः कित्त्वमुत्तरार्थम् । 'जन्यं हट्टे परीवादे सङ्ग्रामे च नपुंसकम् । जन्या मातृवयस्यायां जन्यः स्याज्जनके पुमान् । त्रिषूत्पाद्यजनित्रोश्च नवोढाज्ञातिभृत्ययोः । स्निग्धे' इति मेदिनी ॥ आत्मपक्षे रूपमाह—जायेति ।—अघ्न्यादयश्च । अघ्न्य इति । यकः कित्त्वात् 'गमहन—' इत्युपधालोपे 'हो हन्तेः—' इति कुत्वेन हस्य घः । अडागममनुक्त्वा नञ्पूर्वाद्धन्तेर्यगित्यन्ये ॥—अघ्न्येति । स्त्रियां टाप् । 'माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी । अर्जुन्यघ्न्या रोहिणी स्यात्' इत्यमरः । संपूर्वाद्धायो यक् आतो लोपश्च । संध्या पितृप्रसूनद्यन्तरयोर्युगसन्धिषु' इति मेदिनी । 'कन्या कुमारिकानार्योरोषधीराशिभेदयोः' इति विश्वमेदिन्यौ ॥—वन्ध्येति । वन्ध बन्धने । 'वन्ध्यस्त्वफलवृक्षादौ स्त्रियां स्याद-

५६२। **स्नामदिपद्यर्तिपृशकिभ्यो वनिप्** ॥ स्नावा रसिकः। मद्वा शिवः। पद्वा पन्थाः। अर्वा तुरङ्गगर्ह्ययोः। पर्वा ग्रन्थिः प्रस्तावश्च। शक्वा हस्ती। ङीब्रौ। शक्वरी अङ्गुलिः। ५६३। **शीङ्क्रुशिरुहिजिक्षिसृधृभ्यः क्वनिप्** ॥ शीवा अजगरः। क्रुश्वा सृगालः। रुह्वा वृक्षः। जित्वा जेता। क्षित्वा वायुः। सृत्वा प्रजापतिः। धृत्वा विष्णुः। ५६४। **ध्याप्योः संप्रसारणं च** ॥ धीवा कर्मकरः। पीवा स्थूलः। ५६५। **अदेर्ध च** ॥ अध्वा। ५६६। **प्र ईरशदोस्तुट् च** ॥ प्रेत्वा प्रशत्वा च सागरः। प्रेत्वरी प्रशत्वरी च नदी। ५६७। **सर्वधातुभ्य इन्** ॥ पचिरग्निः। तुडिः। तुण्डिः। वलिः। वटिः। यजिः। देवयजिः। काशत इति काशिः। यतिः। मल्लिः। केलिः। मसी परिणामे। मसिः। बाहुलकाद्गुणः। कोटिः। हेलिः। बोधिः। नन्दिः। कलिः। ५६८। **हृपिषिरुहिवृतिविदिच्छिदिकीर्तिभ्यश्च** ॥ हरिर्विष्णावहाविन्द्रे भेके सिंहे हये रवौ। चन्द्रे कीले प्लवङ्गे च यमे वाते च कीर्तितः। पेपिर्वज्रम्। रोहिर्व्रती। वर्तिः। वेदिः। छदिश्छेत्ता। कीर्तिः। ५६९। **इगुपधात्कित्** ॥ कृपिः। ऋषिः। शुचिः। लिपिः। बाहुलकाद्वत्वे लिबिः। तूल निष्कर्षे। तूलिः। तूली कूर्चिका। ५७०। **भ्रमेः संप्रसारणं च** ॥ भूमिर्वातः। बाहुलकाद्भ्रमिः। ५७१। **क्रमितमिशतिस्तम्भामत इच्च** ॥ क्रिमिः।

प्रजस्त्रियाम्' इति मेदिनी। कौतेर्यति इुक्। कुव्यमित्युज्ज्वलदत्तः। 'यतो नावः' इत्याद्युदात्तः। यक्प्रत्ययान्तोऽयमन्तोदात्त इत्यन्ये इति 'निवाते वातत्राणे' इति सूत्रे वृत्तिः। ङित्त्वाट्टिलोपे सति कित्करणं व्यर्थं स्यादिति गुणप्रतिषेधार्थात्ककारादुकारस्येत्येत्त्वं नेति तत्रैव हरदत्तः। एवं स्थितेऽह्यादयो यगन्ता इति प्रायोवादः॥—**स्नामदि-**। ष्णा शौचे। मदी हर्षे, पद गतौ, ऋ गतौ, पॄ पालनपूरणयोः, शक्लृ शक्तौ। 'अर्वा तुरङ्गमे पुंसि कुत्सिते वाच्यलिङ्गकः' इति मेदिनी। 'पर्व क्लीवं महे ग्रन्थे प्रस्तावे लक्षणान्तरे। दर्शप्रतिपदोः संधौ विषुवत्प्रभृतिष्वपि' इति च॥—**ङीब्राविति**। 'वनो र च' इत्यनेन॥—**अङ्गुलिरिति**। एतच्च 'आरोहतं दर्शतं शक्वरीर्मम' इत्यादिमन्त्रव्याख्यायां स्पष्टम्। 'शक्वरी छन्दसो भेदे नदीमेखलयोरपि' इति मेदिनी॥—**शीङ्-**। शीङ् स्वप्ने, क्रुश आह्वाने रोदने च, रुह बीजजन्मनि प्रादुर्भावे च, जि जये, क्षि निवासगत्योः, सृ गतौ, धृ धारणे॥—**ध्याप्योः-**। ध्यै चिन्तायाम्, प्यैङ् वृद्धौ, आभ्यां क्वनिप्स्यात्संप्रसारणं च। धातोर्हल इति दीर्घः॥—**अदेः-**। अद भक्षणेऽस्मात्क्वनिप् धकारश्चान्तादेशः। अध्वा मार्गः॥—**प्र ईरः-**। ईर गतौ, शद्लृ शातने, आभ्यां प्रपूर्वाभ्यां क्वनिप्स्यात्तस्य तुडागमश्च॥—**प्रेत्वरीति**। स्त्रियाम् 'वनो र च' इति ङीब्रौ॥—**सर्वधातुभ्य इन्**। डुपचष् पाके, तुडि तोडने, तोडनं दारणं हिंसनं च, वल संवरणे, वट वेष्टने, यज देवपूजादौ, काशृ दीप्तौ, यती प्रयत्ने। 'यतिः स्त्री पाठविच्छेदे निकारयतिनोः पुमान्' इति मेदिनी॥ मल मल्ल धारणे, केलृ चलने भ्वादिः, केला विलासे कण्ड्वादिः, किल श्वैत्यक्रीडनयोस्तुदादिः, कुट कौटिल्ये, हिल भावकरणे, बुध अवगमने, टुनदि समृद्धौ, कल शब्दसंख्यानयोः। 'गाङ्कुटादिभ्यः-' इति ङित्त्वाद्गुणाभावमाशङ्क्याह—**बाहुलकादिति**। 'कोटिः स्त्री धनुषोऽग्रेऽश्रौ संख्याभेदप्रकर्षयोः' इति मेदिनी। 'बोधिः पुंसि समाधेश्च भेदे पिप्पलपादपे' इति च। 'नन्दिर्धूताङ्ग आनन्दे स्त्री नन्दिकेश्वरे पुमान्' इति च। इह इन्नित्येव सूत्रम्। सर्वधातुभ्य इति तु प्रक्षिप्तं व्यर्थं च। एवं सर्वधातुभ्यष्ट्रन्नित्यादावपि बोध्यमित्याहुः। अत एव दशपाद्यां ष्ट्रन्नित्येव पठितमिति दिक्॥—**हृपिषि-**। हृञ् हरणे, पिष्लृ संचूर्णने, रुह बीजजन्मनि प्रादुर्भावे च, वृतु वर्तने। वर्तिर्दीपोपकरणम्। विद सत्तायाम्। विद्यते पुण्यमस्यामिति वेदिः 'वेदिः परिष्कृता भूमिः'। छिदिर् द्वैधीकरणे, कृत संशब्दने, हरतेः कीर्तयतेश्च 'अच इः' इति प्राप्ते इतरेषां तु 'इगुपधात्-' इति कप्रत्यये प्राप्ते वचनमिदम्। 'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु। शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु' इत्यमरः। 'हरिश्चन्द्रार्कवाताश्वशुकभेकयमादिषु। कपौ सिंहे हरेऽजेशौ शक्रे लोकान्तरे पुमान्। वाच्यवत्पिङ्गहरितोः' इति मेदिनी। 'वर्तिर्भेषजनिर्माणे नयनाञ्जनलेखयोः। गात्रानुलेपनी दीपदशादीपेषु योषिति' इति मेदिनी। 'वेदिः स्यान्मण्डले पुमान्। स्त्रियामङ्गुलिमुद्रायां स्यात्परिष्कृतभूतले' इति च। 'कीर्तिः प्रसादयशसोर्विकारे कर्दमेऽपि च' इति विश्वः॥—**इगुपधात्-**। कृप विलेखने, ऋषी गतौ, शुच शोके, लिप उपदेहे, इत्यादेरिगुपधाद्धातोरिन्स्यात्स च कित्। केचित्तु इगुपधात्किरिति पठित्वा इणोऽपवादः किप्रत्यय इति व्याचख्युः। तन्न। प्रत्ययस्वरेण कृप्यादीनामन्तोदात्ततापत्तेः। न चेष्टापत्तिः। 'अग्निः पूर्वेभिरृषिभिः' 'ऋषिर्विप्रः काव्येन' 'शुचिर्विप्रः शुचिः कविः' इत्यादौ ऋषिशुचिप्रभृतीनामाद्युदात्तत्वदर्शनात्। न चैवम् 'अक्षैर्मा दीव्यः कृषिमित्कृषस्व' इत्यादौ कृषिशब्दस्यान्तोदात्तता न सिद्ध्येदिति वाच्यम्। 'इकृष्यादिभ्यः' इतीक्प्रत्यये सत्यन्तोदात्तत्वसिद्धेः। 'ऋषिर्वेदे वसिष्ठादौ दीधितौ च पुमानयम्' इति मेदिनी। 'शुचिर्ग्रीष्माग्निशृङ्गारेष्वाषाढे शुद्धमन्त्रिणि' इति च॥—**भ्रमेः**। भ्रमु अनवस्थानेऽस्मादिन्स्यात् स च कित् संप्रसारणं च। 'भूमिं चिद्यथा वसवः पुषन्ति' इति मन्त्रे भूमिं भरणशीलं दरिद्रं जनमिति वेदभाष्यम्॥—**क्रमि-**। क्रमु पादविक्षेपे, तमु काङ्क्षायाम्, शतिस्तम्भौ सौत्रौ, एभ्य इन्स्यात्स च कित्। एषामत एकारादेशश्च। क्रिमिः क्षुद्रजन्तुः। 'क्रमिर्ना क्रिमिवत्कीटे लाक्षायां क्रिमिले खरे' इति विश्वमेदिन्यौ। 'पारतं पारदं वासो वासरः क्रिमिवत्क्रमिः' इति द्विरूपकोशः॥—

संप्रसारणानुवृत्तेः कृमिरपि । तिमिर्मत्स्यभेदः । शितिर्मेचकशुक्लयोः । स्तिम्भिः समुद्रः । ५७२ । मनेरुच्च ॥ मुनिः । ५७३ । वर्णेर्वलिश्चाहिरण्ये ॥ वर्णिः सौत्रः । अस्य वलिरादेशः । करोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्त्रियाम् । हिरण्ये तु वर्णिः सुवर्णम् । ५७४ । वसिवपियजिराजिव्रजिसदिहनिनाशिवाशिवारिभ्य-इञ् ॥ वासिश्छेदनवस्तुनि । वापिः । वापी । याजिर्यष्टा । राजिः । राजी । व्राजिर्वातालिः । सादिः सारथिः । निघातिर्लोहघातिनी । वाशिरग्निः । वादिर्विद्वान् । वारिर्गजबन्धनी । जले तु क्लीवम् । बाहुलकाद्धारिः पथिकसंहतौ । ५७५ । नहो भश्च ॥ नाभिः स्यात्क्षत्रिये पुंसि । प्राण्यङ्गे तु स्त्रियाम् । पुंस्यपीति केचित् । ५७६ । कृषेर्वृद्धिश्छन्दसि ॥ कार्षिः । ५७७ । श्रः शकुनौ ॥ शारिः । शारिका । ५७८ । कृञ उदीचां कारुषु ॥ कारिः शिल्पी । ५७९ । जनिघसिभ्यामिण् ॥ जनिर्जननम् । घासिर्भक्ष्यमग्निश्च । ५८० । अज्यतिभ्यां च ॥ आजिः संग्रामः । आतिः पक्षी । ५८१ । पादे च ॥ पदाजिः । पदातिः । ५८२ । अशिपणाय्यो रुडायलुकौ च ॥ अशे रुट् । राशिः पुञ्जः । पणायतेरायलुक् । पाणिः करः । ५८३ । वातेर्डिच्च ॥ विः पक्षी । स्त्रियां वीत्यपि । ५८४ । प्रे हरतेः कूपे ॥ प्रहिः कूपः । ५८५ । नौ व्यो यलोपः पूर्वस्य च दीर्घः ॥ व्येञ इण् स्याद् यलोपश्च नेर्दीर्घः । नीविः । नीवी वस्त्रग्रन्थौ मूलधने च । ५८६ । समाने ख्यः स चोदात्तः ॥ समानशब्दे उपपदे ख्या इत्यस्मादिण् स्यात्स च डिच्च यलोपश्च समानस्य तूदात्तः स इत्यादेशश्च ।

**तिमिरिति** । 'अस्ति मत्स्यस्तिमिर्नाम तथा चास्ति तिमिंगिलः । तिमिंगिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति लक्ष्मण' इति रामायणे सप्तमे काण्डे रामवाक्यम् । केचित्तु 'तद्गिलोऽप्यस्ति राघव' इति पठित्वा राघवं प्रति लक्ष्मणवाक्यमित्याहुः । 'शितिः कृष्णे सिते भूर्जे' इति विश्वः । 'शितिर्भूर्जे ना सितासितयोस्त्रिषु' इति मेदिनी ॥—**मनेः**—। मन ज्ञाने अस्मादिन्स्यात्स च किद् अकारस्योकारादेशश्च स्यात् । मन्यते जानातीति मुनिः । 'मुनिः पुमान्वसिष्ठादौ वङ्गसेनतरौ जिने' इति मेदिनी ॥—**वर्णेः**—। अस्मादिन्स्यात्स च कित् ॥—**वसि**—। वस निवासे, डुवप् बीजसन्ताने, यज देवपूजादौ, राजृ दीप्तौ, व्रज गतौ, षद्लृ विशरणादौ, हन हिंसागत्योः, वाशृ शब्दे, वद व्यक्तायां वाचि ण्यन्तः, वृञ् वरणे ण्यन्तः । वासिरिति दन्त्यसकारवान् । सूत्रेऽष्टमस्तु तालव्यशकारवान् । वास्यादीनामिव करणानां कर्त्र्यापार्यत्वनियमादिति वैशेषिकाः । वास्यर्थमित्यत्र 'स्कोः—' इति सलोपः प्राप्नोतीति भाष्यम् । वापिरुदकाधारः । वापी प्रसिद्धा । 'राजिः स्त्री पङ्क्तिरेखयोः' इति मेदिनी । इह वादीति ण्यन्तनिर्देशेऽपि वाहुलकादण्यन्तादपि इञ् । तथा च भूवादिसूत्रे वदन्तीति वादयो वाचका इति न्यासकारादयः । 'वारि स्मृता सरस्वत्यां वारि ह्रीबेदनीरयोः' । 'वारी घटीभवन्धन्योः' इति विश्वः । हृञ् हरणेऽस्मादिञ् । 'हारिः पथिकसन्तानद्यूतादिभङ्गयोः स्त्रियाम्' इति मेदिनी ॥—**नहः**—। णह बन्धनेऽस्मादिञ् स्यात् भश्चान्तादेशः ॥—**स्त्रियामिति** । लिङ्गानुशासने स्त्रियामित्यधिकारे 'नाभिरक्षत्रिये' इति सूत्रितत्वादिति भावः ॥—**पुंस्यपीति** । तथा च मेदिनी 'नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान् । द्वयोः प्राणिप्रतीके स्यात्त्रिषु कस्तूरिकामदे' इति । भारविश्च पुंसि प्रायुङ्क्त, 'समुच्छ्वसत्पङ्कजकोशकोमलैरुपाहितश्रीण्युपनीविनाभिभिः' इति ॥—**कृषेः**—। कृष विलेखनेऽस्मादिञ् वृद्धिश्च 'इको गुणवृद्धी' इतीकः स्थाने एव वृद्धिरित्युदाहरति—**कार्षिरिति** । भाषायां तु कृषिरित्येव ॥—**श्रः**—। शॄ हिंसायामस्माच्छकुनौ वाच्ये इञ्स्यात् । 'शारिर्नाक्षोपकरणे स्त्रियां शकुनिकान्तरे । युद्धार्थगजपर्याणे व्यवहारान्तरेऽपि च' इति मेदिनी ॥ कपिलकादित्वाल्लत्वम् । 'शालिस्तु कलमादौ च गन्धमार्जारके पुमान्' इति मेदिनी ॥ **क्रियः**—। करोतेरिञ्स्यादुदीचां मते कारुषु वाच्येषु । 'कारिः स्त्रियां क्रियायां स्याद्वाच्यलिङ्गस्तु शिल्पिनि' इति मेदिनी । —**जनि**—। जनी प्रादुर्भावे, घस्लृ अदने, आभ्यामिण् 'जनिवध्योश्च' इति वृद्धिप्रतिषेधः । जनिरिति स्त्रीलिङ्गम् । 'कृदिकारात्—' इति पक्षे ङीष् । 'जनी सीमन्तिनीवध्वोरुत्पत्तावौषधीभिदि' इति मेदिनी ॥—**अजि**—। अज गतिक्षेपणयोः, अत सातत्यगमने । वाहुलकादजेर्वीभावो न ॥ पादे चोपपदे 'अज्यतिभ्यामिण्' । 'पादस्य पदाज्यातिगोपहतेषु' इति पदादेशः । पदाजिः पादचारी । 'पदातिपत्तिपदगपादातिकपदाजयः । पद्गश्च पथिकश्च' इत्यमरः ॥—**अशिपणाय्योः**। अशिश्च पणायिश्चाशिपणाय्यौ तयोरिति विग्रहः । अशू व्याप्तौ, पण व्यवहारे आयप्रत्ययान्तः, आभ्यामिण् स्यादनयोर्यथाक्रमं रुडायप्रत्ययलुकौ च भवतः । 'राशिर्मेषादिपुञ्जयोः' इति मेदिनी ॥—'**वातेः**—। वा गतिगन्धनयोरस्मादिण् स्यात् । डित्त्वाट्टिलोपः ॥—**प्रे**—। प्रपूर्वाद्धरतेः कूपे वाच्ये इण् । 'पुंस्येवान्धुः प्रहिः कूप उदपानं तु पुंसि वा' इत्यमरः ॥ —**नौ**—। व्येञ् संवरणे । 'स्त्रीकटीवस्त्रबन्धेऽपि नीवी परिपणेऽपि च' इत्यमरः । परिपणो मूलधनम् ॥—**समाने**—। ख्या प्रकथने ॥—**इण् स्यादिति** । यत्तूज्ज्वलदत्तेनोक्तमिञ् स्यात्स चोदात्त इति । तन्न । संनिहितेन 'जनिघसिभ्यामिण्' इत्यनेन 'वसिवपियजी'त्यादिना विहितस्येञो विच्छिन्नत्वात् । यदपि तेनैव 'नौ व्यः' इति पूर्वसूत्रे उक्तमिञत्रानुवर्तते न त्विण् । उत्तरसूत्रे उदात्तवचनाज्ज्ञापकादिति । तदपि न । स चोदात्त इति हि नायं धातोः परत्र विहितं प्रत्ययं निर्दिष्टं

१ यद्वा भारविप्रयोगे सामान्ये नपुंसकत्वं पदसंस्कारता चाभ्युपगम्यते। तथाच लिङ्गानुशासनवृत्तौ 'नाभिरक्षत्रिये' इति सूत्रे मूले एव वक्ष्यते इत्यधिकः क्वचित्पाठः ॥

समानं ख्यायते जनैरिति सखा । ५८७ । **आङि श्रिहनिभ्यां ह्रस्वश्च** ॥ इण् स्यात्स च डित् आङो ह्रस्वश्च । श्रियः पाल्यश्रिकोटयः । सर्पे वृत्रासुरेऽप्यहिः । ५८८ । **अच इः** ॥ रविः । पविः । तरिः । कविः । अरिः । अलिः । ५८९ । **खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिचरिभ्यश्च** ॥ खनिः । कषिर्हिंस्रः । अजिः । असिः । वसिर्वस्त्रम् । वनिरग्निः । सनिर्भक्तिर्दानं च । ध्वनिः । ग्रन्थिः । चरिः पशुः । ५९० । **वृतेश्छन्दसि** ॥ वर्तिः । ५९१ । **भुजेः किच्च** ॥ भुजिः । ५९२ । **कॄगॄशॄपॄकुटिभिदिच्छिदिभ्यश्च** ॥ इः कित्स्यात् । किरिर्वराहः । गिरिर्गोत्राक्षिरोगयोः । गिरिणा काणः गिरिः काणः । शिरिः शलभो हन्ता च । पुरिर्नगरं राजा नदी च । कुटिः शाला शरीरं च । भिदिर्वज्रम् । छिदिः परशुः । ५९३ । **कुडिकम्प्योर्नलोपश्च** ॥ कुडि दाहे । कुडिर्देहः । कपिः । ५९४ । **सर्वधातुभ्यो मनिन्** ॥ क्रियत इति कर्म । चर्म । भस्म । जन्म । शर्म । स्थाम बलम् । 'इस्मन्–२९८५' इति ह्रस्वः ॥ छद्म । सुत्रामा । ५९५ । **बृंहेर्नोच्च** ॥ नकारस्याकारः । ब्रह्म तत्त्वं तपो वेदो ब्रह्मा विप्रः प्रजापतिः । ५९६ । **अशिशकिभ्यां छन्दसि** ॥ अश्मा । शक्मा । ५९७ । **हृभृधृसृस्तृशॄभ्य इमनिच्** ॥ हरिमा कालः । भरिमा कुटुम्बम् । धरिमा । रूपम् । सरिमा वायुः । स्तरिमा तल्पम् ।

---

तच्छब्दः किंतु समानशब्दस्य स्थाने विधीयमानमादेशं निर्देष्टुं शब्दस्वरूपपरः । तथा च कथं ज्ञापकता स्यात् । यदपि स इञ् उदात्त इति व्याख्याय समानस्य सभाव इति प्रक्रियास्मरणमात्रं कृतं तदपि न । सभावविधायकस्याभावात् । यदपि स्वरमञ्जरीकारादिभिरुक्तं 'समानस्य च्छन्दसि' इति सूत्रेण सभाव इति तदपि न, लोके सखिशब्दस्यासाधुत्वापत्तेः । अपि च 'सखा सखायमब्रवीत्' 'सखायस्त्वा ववृमहे' । 'सखा सखिभ्य ईड्यः' इत्यादिमन्त्रेषु सर्वत्र सखिशब्द आद्युदात्त एवेति निर्विवादम् । एवं च इञुदात्त इत्युज्ज्वलदत्तादिव्याख्यानं वेदवार्तानभिज्ञत्वप्रयुक्तमेवेति दिक् ॥—**आङि–**। श्रिञ् सेवायाम्, हन हिंसागत्योः । अमरोक्तिमाह—**श्रिय इति** । एवं च 'सुप्रातसुश्व–' इति सूत्रे चतुरश्रेति तालव्यपाठः संगच्छत एव । तत्सूत्रे केषांचिद्दन्त्यपाठस्तु एतत्सूत्रापर्यालोचनामूलक एवेत्यवधेयम् । नन्वेवं चतुरस्रमिति दन्त्यप्रयोगस्य कथं निर्वाह इति चेदत्राहुः । अकारान्तेन दन्त्यगर्भिणास्रशब्देन विग्रहे तत्प्रयोगः साधीयान् । न च तादृशे शब्दे विप्रतिपत्तव्यम् । 'अस्रः कोणे कचे पुंसि क्लीबमश्रुणि शोणिते' इति मेदिनीकोशादिति । 'अहिर्वृत्रासुरे सर्पे' इति मेदिनी ॥—**अच इः** । अजन्ताद्धातोरिः स्यात् । रु शब्दे, पूञ् पवने, पविर्वज्रम् । तॄ प्लवनतरणयोः । तरिर्वस्त्रादिस्थापनभाण्डम् । 'स्त्रियां नौस्तरणिस्तरिः' इत्यमरः । कु शब्दे । 'कविर्वाल्मीकशुक्रयोः । सूरौ काव्यकरे पुंसि स्याच्छलीने तु योषिति' इति मेदिनी ॥ ऋ गतौ । अरिः शत्रुः । कपिलकादित्वाद्वैकल्पिकं लत्वम् । अलिर्भ्रमरः ॥—**खनिः–**। खनु अवदारणे । कष खषेति दण्डके हिंसार्थकः । अज गतिक्षेपणयोः, असु क्षेपणे, वस आच्छादने, वन षण संभक्तौ, वनु याचने, षणु दाने, ध्वन शब्दे, ग्रन्थ बन्धने उभौ चुरादी, चल कम्पने, एभ्य इः स्यात् । 'खनिः स्त्रियामाकरः स्यात्' इत्यमरः । ण्यन्तात् 'अच इः' इति इप्रत्यये खानिरपि । 'खनिरेव मता खानिः' इति द्विरूपकोशः । 'ग्रन्थिस्तु ग्रन्थिपर्णे ना बन्धे रुग्भेदपर्वणोः' इति मेदिनी । 'ग्रन्थिर्ना पर्वपरुषी' इत्यमरः ॥—**वनिरग्निरिति** । वनु याचने इत्यस्मादिप्रत्यये वनिर्याञ्चा इत्याहुः ॥—**चरिः पशुरिति** । चरिभ्यश्चेति पाठान्तरम् । चर गतौ, चरतिर्भक्षणेऽपि । चरिः पशुः ॥—**वृतेः** । वृतु वर्तनेऽस्मादिः स्यात् । बाहुलकाल्लोकेपि 'साज्यं त्रिवर्तिसंयुक्तम्' इति प्रयोगः । 'वर्तिर्भेषजनिर्माणे नयनाञ्जनलेखयोः । गात्रानुलेपनीदीपदशादीपेषु योषिति' इति मेदिनी ॥—**भुजेः–**। भुज पालनाभ्यवहारयोरस्मादिः स्यात्स कित् । भुजिरग्निः ॥—**कॄगॄशॄ–**। कॄ विक्षेपे, गॄ निगरणे, शॄ हिंसायाम्, पॄ पालनपूरणयोः, कुट कौटिल्ये, भिदिर् विदारणे, छिदिर् द्वैधीकरणे । 'वराहः सूकरो घृष्टिः कोलः पोत्री किरिः किटिः' इत्यमरः । 'इगुपधज्ञाप्रीकिरः–' इति कप्रत्यये किर इत्यकारान्तोऽपि । 'त्वचि त्वचः किरोपि स्यात् किरौ प्रोक्तः पथः पथि' इति द्विरूपकोशः । 'गिरिर्ना नेत्ररुग्भिदि । अद्रौ गिरिजके योषिद्गीर्णौ पूज्ये पुनस्त्रिषु' इति मेदिनी ॥—**कुटिरिति** । ङीपि तु कुटी । 'कुटीशमीशुण्डाभ्यो रः' कुटीरः । 'कुटिः कोटे पुमानस्त्री घटे स्त्रीपुंसयोर्गृहे । कुटी स्यात्कुम्भदास्यां च चुरायां चित्रगुच्छके' इति मेदिनी ॥—**कुण्डि–**। कुडि दाहे, कपि चलने, आभ्यामिः कित्स्याद्धातोर्नलोपश्च । 'कपिर्ना सिंहके शाखामृगे च मधुसूदने' इति च ॥—**सर्वधातुभ्यः–**। डुकृञ् करणे, चर गतौ, चरतिर्भक्षणेऽपि, जन जनने, भस भर्त्सनदीप्त्योः, शॄ हिंसायाम्, शर्म सुखे, ष्ठा गतिनिवृत्तौ, छद अपवारणे चुरादिः, त्रैङ् पालने । सुष्ठु त्रायते इति सुत्रामा इन्द्रः । 'कर्मव्याप्ये क्रियायां च पुंनपुंसकयोर्मतम्' इति रुद्रः । 'चर्म वृत्तौ च फलके' इति मेदिनी ॥—**बृंहेः–**। बृहि वृद्धावस्मान्मनिन्नुमो नकारस्याकारे ऋकारस्य यणादेशः । 'ब्रह्म तत्त्वं तपो वेदे न द्वयोः पुंसि वेधसि । ऋत्विग्योगभिदोर्विप्रे' इति मेदिनी ॥—**अशि–**। अशू व्याप्तौ संघाते च, शक्लृ शक्तौ, शक्मा इन्द्रः । छन्दसीत्यस्य शकिना संबन्धो न त्वशिना । अत एव 'अश्मानमारोपयतः स्मरारेः' इति प्रयोगः । 'हृञ् हरणे' डुभृञ् धारणपोषणयोः, धृ धारणे, सृ गतौ, स्तृञ् आच्छादने, शॄ हिंसायाम् ॥—**हरिमेति–**। एतच्चोज्ज्वलदत्तरीत्योक्तम् । दशपाद्यां तु शृणातिर्न पठ्यते तत्स्थाने स्वधातुं प्रक्षिप्य प्रत्ययं च दीर्घादिं नितं च कृत्वा, स्तृसृभ्यामीमनिति पठ्यते छन्दोग्रहणं चानुवर्तितम् । युक्तं चैतत् । 'पिपृतां नो भरीमभिः' । 'वातस्य

शरिमा प्रसवः । ५९८ । जनिमृङ्भ्यामिमनिन् ॥ जनिमा जन्म । मरिमा मृत्युः । ५९९ । वेञः सर्वत्र ॥ छन्दसि भाषायां चेत्यर्थः । वेमा तन्तुवायदण्डः । अर्धर्चादिः । सामनी वेमनी इति वृत्तिः । ६०० । नामन् सीमन् व्योमन् रोमन् लोमन् पाप्मन् ध्यामन् ॥ सप्त अमी निपात्यन्ते । म्नायतेऽनेनेति नाम । सिनोतेर्दीर्घः । सीमा सीमानौ । सीमानः । पक्षे डाप् । सीमे सीमाः । व्येञोऽन्त्यस्योत्वं गुणः । व्योम । रौतेः । रोम । लोम । पाप्मा पापम् । ध्याम परिमाणं तेजश्च । ६०१ । मिथुने मनिः ॥ उपसर्गक्रियासंबन्धो मिथुनम् । स्वरार्थमिदम् । सुशर्मा । ६०२ । सातिभ्यां मनिन्मनिणौ ॥ स्यति । साम । सामनी । आत्मा । ६०३ । हनिमशिभ्यां सिकन् ॥ हंसिका हंसयोषिति । मक्षिका । ६०४ । कोररन् ॥ कवरः । ६०५ । गिर उडच् ॥ गरुडः । ६०६ । इन्देः कमिन्नलोपश्च ॥ इदम् । ६०७ । कायतेर्डिमिः ॥ किम् । ६०८ । सर्वधातुभ्यः ष्ट्रन् ॥ वस्त्रम् । अस्त्रम् । शस्त्रम् । 'इस्मन् २९८५' इति ह्रस्वत्वम् । छादनाच्छत्रम् । ६०९ । भ्रस्जिगमिनमिहनिविश्यशां वृद्धिश्च ॥ भ्राष्ट्रः । गात्रं शकटम् । नात्रं स्तोत्रम् । हात्रं मरणम् । वैष्ट्रं विष्टपम् । आष्ट्रमाकाशम् । ६१० । दिवेर्द्युच्च ॥ द्यौत्रम् । ६११ । उषिखनिभ्यां कित् ॥ उष्ट्रः । खात्रं खनित्रं जलाधारश्च । ६१२ । सिविमुच्योष्टेरू च ॥ सूत्रम् । मूत्रम् । ६१३ । अमिचिमिदिशसिभ्यः क्त्रः ॥ आन्त्रम् । चित्रम् । मित्रम् । शस्त्रम् । ६१४ ।

---

सर्गे अभवत्सरीमणि' 'स्तीर्णं बर्हिः सुष्टरीमा जुषाणा' । 'यस्यामतिर्भा अदिद्युतत्सवीमनि हिरण्यपाणिः' इत्यादिमन्त्राणां तद्भाष्यस्य चानुगुणत्वात् । उक्तप्रयोगाणां भाषायामदर्शनेन च्छन्दोऽनुवृत्तेर्न्याय्यत्वाच्च । अत एव वेञः सर्वत्रेति सूत्रे सर्वत्रग्रहणं करिष्यति ॥—**जनी–**। जन जनने, मृङ् प्राणत्यागे ॥—**वेञः–**। वेञ् तन्तुसन्ताने ॥—**निपात्यन्त इति** । मनिनन्ता इति शेषः । म्ना आभ्यासे । मलोपो नाभावो वा । नाम संज्ञा । षिञ् बन्धने, 'सीमसीमे स्त्रियामुभे' इत्यमरः । व्येञ् संवरणे, रु शब्दे, रोम गात्रकेशः । लूञ् छेदने । लोम स एव । पा पाने युगागमः । ध्यै चिन्तायां बाहुलकादन्येभ्योऽपि । यक्ष पूजायाम् । 'क्षयः शोषश्च यक्ष्मा च' इत्यमरः । षू प्रेरणे, सोमा चन्द्रः । डुधाञ् धारणपोषणयोः । 'धाम देशे गृहे रश्मौ स्थाने जन्मप्रभावयोः' इति मेदिनी ॥—**मिथुने–**। शॄ हिंसायाम्, सुष्ठु शृणाति इति सुशर्मा राजविशेषः । कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तं पदम् । मनिनि तु मध्योदात्तं स्यात् ॥—**साति–**। षोऽन्तकर्मणि, अत सातत्यगमने, आभ्यां यथासंख्यमेतौ स्तः । स्यति दुःखयति दुरध्येयत्वात्साम । 'साम क्लीबमुपायस्य भेदे वेदान्तरेऽपि च' इति मेदिनी । 'आत्मा पुंसि स्वभावे स्यात्प्रयत्नमनसोरपि । धृतावपि मनीषायां शरीरब्रह्मणोरपि' इति च ॥—**हनि–**। हन हिंसागत्योः, मश शब्दे रोषकृते च । 'मक्षिका भम्भराली स्यात्' इति हारावली ॥—**कोररन्**। कु शब्दे । कवरः पाठकः । बवयोरैक्यात्कबरी केशविन्यासः । 'जानपद–' इति ङीष् । अन्यत्र कवरा ॥—**गिरः–**। गॄ निगरणे । केचित्तु सूत्रमिदं परित्यज्य गरुता डयत इति विगृह्य डीङो डप्रत्यये पृषोदरादित्वाद्गरुतस्तकारलोपे गरुडशब्दं क्लेशेन व्युत्पादयन्ति ॥—**इन्देः–**। इदि परमैश्वर्ये । उज्ज्वलदत्तस्तु कमिन्निति नितं पपाठ तच्चिन्त्यम् । 'इदं त्वत्पात्रमिन्द्रपानम्' । 'इदन्ते सोम्यं मधु' इत्यादौ नित्स्वराभावात् । दशपाद्यां तु 'इणो दमक्' इति सूत्रितम् । इदमिति सर्वनामशब्दोऽयं संनिहितपरामर्शी ॥—**कायतेः** । कै गै शब्दे । प्रयोजनाभावादेव मकारस्येत्संज्ञाविरहे सिद्धे डिमेरिकार उच्चारणार्थः । डकारस्तु टिलोपार्थः । दशपाद्यां तु मान्तमेव डिमिति सूत्रितम् । किमिति सर्वनाम ॥—**सर्वधातुभ्यः–**। दशपाद्यां तु अर्थात्सर्वधातुभ्यो भविष्यतीत्याशयेन ष्ट्रन्नित्येव सूत्रितम् । अत एवाधिकं प्रक्षिप्तमित्याहुः । वस निवासे, असु क्षेपणे, शसु हिंसायाम्, छद अपवारणे ण्यन्तः । 'अस्त्रं प्रहरणे चापे करवाले नपुंसकम्' इति मेदिनी । पत्लृ गतौ । 'पत्रं तु वाहने पर्णे स्यात् पक्षे शरपक्षिणोः' इति मेदिनी । पा पाने । पात्रम् । षित्त्वान् ङीष् 'पात्र्यमत्रे त्रिषु क्लीबं स्रुवादौ राजमन्त्रिणि । तीरद्वयान्तरे योग्ये' इति मेदिनी । दंश दशने च, 'व्रश्च—' आदिना षत्वे ष्टुत्वं षितां ङीषोऽनित्यत्वाट्टाप् । दंष्ट्रा ॥—**भ्रस्जि–**। भ्रस्ज पाके, गम्लृ गतौ, णम प्रह्वत्वे शब्दे च, हन हिंसागत्योः, विश प्रवेशने, अशू व्याप्तौ, एभ्यः ष्ट्रन् स्यादेषां वृद्धिश्च ॥—**भ्राष्ट्र इति** । संयोगादिलोपः । 'व्रश्च' इति षत्वे ष्टुत्वम् । 'क्लीबेऽम्बरीषं भ्राष्ट्रो ना' इत्यमरः । वैष्ट्रं विष्टपम् ॥—**दिवेः–**। दिवु क्रीडादावस्मात् ष्ट्रन् स्यात् द्युादेशो वृद्धिश्च धातोः ॥ —**उषि–**। उष दाहे, खनु, अवदारणे, आभ्यां ष्ट्रन् कित्स्यात् । उष्ट्रः क्रमेलकः । 'उष्ट्रे क्रमेलकमयमहाङ्गाः' इत्यमरः । —**सिवि–**। षिवु तन्तुसन्ताने, मुच्लृ मोक्षणे, आभ्यां ष्ट्रन्कित्स्यात् टेरूकारादेशश्च । सूत्रिमूत्रिभ्यां चुरादिण्यन्ताभ्यामेरचा रूपसिद्धेराद्युदात्तार्थमिदं सूत्रम् । न च घञा तत्सिद्धिः 'एरच्' इत्यस्य घञो बाधकत्वात् । 'सूत्रं तु सूचनाग्रन्थे सूत्रतन्तुव्यवस्थयोः' इति विश्वः ॥—**अमि–**। अम गतिशब्दसंभक्तिषु, चिञ् चयने, ञिमिदा स्नेहने, शसु हिंसायाम् ॥ —**आन्त्रमिति–**। 'अनुनासिकस्य–' इति दीर्घः । 'श्रोणिलम्बिपुरुषान्त्रमेखलाम्' इति कालिदासः । 'आलेख्याश्चर्ययोश्चित्रम्' इत्यमरः । 'मित्रं सुहृदि न द्वयोः । सूर्ये पुंसि' इति मेदिनी । 'शस्त्रं लोहास्त्रयोः क्लीबं क्षुरिकायां तु योषिति' इति च । प्रत्ययस्वरेणैतेऽन्तोदात्ताः । 'शुन आन्त्राणि पेचे' । 'चित्रं देवानाम्' । 'मित्रं नयम्' । 'शस्त्रस्य शस्त्रमसि'

पुवो ह्रस्वश्च ॥ पुत्रः । ६१५ । स्त्यायतेर्ड्रट् ॥ स्त्री । ६१६ । गुधृवीपचिवचियमिसदिक्षदिभ्यस्त्रः ॥ गोत्रं स्यान्नामवंशयोः । गोत्रा पृथिवी । धत्रं गृहम् । वेत्रम् । पक्त्रं । वक्त्रम् । यत्रम् । सत्रम् । क्षत्रम् । ६१७ । हुयामाश्रुभसिभ्यस्त्रन् ॥ होत्रम् । यात्रा । मात्रा । श्रोत्रम् । भस्त्रा । ६१८ । गमेरा च ॥ गात्रम् । ६१९ । दादिभ्यश्छन्दसि ॥ दात्रम् । पात्रम् । ६२० । भूवादिगृभ्यो णित्रन् ॥ भावित्रम् । वादित्रम् । गादित्रमोदनम् । ६२१ । चरेर्वृत्ते । चारित्रम् । ६२२ । अशित्रादिभ्य इत्रोत्रौ ॥ अशित्रम् । वहित्रम् । धरित्री मही । त्रैङ् एवमादिभ्य उत्रः । तोत्रं प्रहरणम् । वृत्रं वरुत्रं प्रावरणम् । ६२३ । अमेर्द्विषति चित् ॥ अमित्रः शत्रुः । ६२४ । आः समिण्निकषिभ्याम् ॥ संपूर्वादिणो निपूर्वात्कषेश्च आ स्यात् । स्वरादित्वादव्ययत्वम् । समया । निकषा । ६२५ । चित्तेः कणः कश्च ॥ बाहुलकादगुणः । चिक्कणं मसृणं स्निग्धम् । ६२६ । सूचेः स्मन् ॥ सूक्ष्मम् । ६२७ । पातेर्डुम्सुन् ॥ पुमान् । ६२८ । रुचिभुजिभ्यां किष्यन् ॥ रुचिष्यमिष्टम् । भुजिष्यो दासः । ६२९ । वसेस्तिः ॥ वस्तिर्नाभेरधो द्वयोः । वस्तयः स्युर्दशासूत्रे । बाहुलकात् शासः शास्तिः राजदण्डः । विन्ध्यास्यमगमस्यतीत्यगस्तिः । शकन्ध्वादिः । ६३० । सावसेः ॥ स्वस्ति । स्वरादिपाठादव्ययत्वम् । ६३१ । वौ तसेः ॥ वितस्तिः । ६३२ । पदिप्रथिभ्यां नित् ॥ पत्तिः । प्रथितिः ।

---

इत्यादि ॥—**पुवः** । पूञ् पवनेऽस्मात्क्रः स्यात् धातोर्ह्रस्वत्वं च । पुनाति स्ववंशानिति पुत्रः । पुंनाम्नो नरकस्तस्मात् त्रायते इत्यर्थे 'आतोऽनुपसर्गे कः' इति कप्रत्यये पुत्र इति व्युत्पत्त्यन्तरम् ॥—**स्त्यायतेः**—। स्त्यै ष्ट्यै शब्दसंघातयोः ॥—**त्रिति** । डित्त्वाट्टिलोपः । 'लोपो व्योः—' इति यलोपः । टित्वान्ङीप् । 'स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः' इत्यमरः ॥—**गुधृ**—। गुङ् अव्यक्ते शब्दे, धृञ् धारणे, वी गतिप्रजनादौ, डुपचष् पाके, वच परिभाषणे, यम उपरमे, षद्लृ विशरणगत्यादौ, क्षद इति सौत्रः । 'गोत्रा भूगव्ययोर्गोत्रः शैले गोत्रं कुलाख्ययोः । संभावनीयबोधे च काननक्षेत्रवर्त्मसु' इति मेदिनी ॥ 'सत्रमाच्छादने यज्ञे सदादाने धनेऽपि च' इत्यमरः । 'सत्रं यज्ञसदादानच्छादनारण्यकैतवे' इति मेदिनी । क्षत्रं ब्राह्मणानन्तरजातिः ॥—**हुयामा**—। हु दानादनयोः, या प्रापणे, मा माने, श्रु श्रवणे, भस भर्त्सनदीप्त्योः । होत्रमाहुतिः । होत्राशब्द ऋत्विक्ष्वपि स्त्रीलिङ्ग इति 'होत्राभ्यश्छः' इति सूत्रे हरदत्तादयः । 'यात्रा तु यातनेऽपि स्याद्गमनोत्सवयोः स्त्रियाम्' इति मेदिनी । 'मात्रा कर्णविभूषायां वित्ते माने परिच्छदे । अक्षरावयवे स्वल्पे क्लीबं कार्त्स्न्येऽवधारणे' इति च । 'कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः' इत्यमरः । 'भस्त्रा चर्मप्रसेविका' इति च ॥ —**गमेः**—। गम्लृ गतावस्मात् त्रन्स्याद्धातोराकारान्तादेशश्च । 'गात्रमङ्गे कलेवरे । स्तम्बेरमाग्रजङ्घादिविभागेऽपि समीरितम्' इति विश्वः ॥—**दादिभ्यः**—। दाप् लवने एवमादिभ्यस्त्रन् । दात्रं धान्यादिच्छेदनसाधनम् । पा पाने, 'योग्यभाजनयोः पात्रम्' इत्यमरः । क्षि निवासगत्योः । क्षेत्रमित्यादि योज्यम् ॥—**भूवादि**—। भू सत्तायाम् । भावित्रं त्रैलोक्यम् । वद व्यक्तायां वाचि ण्यन्तः । वादित्रं तूर्यादि । गॄ निगरणे ॥—**चरेः** । चर गतौ, अस्माण्णित्रन्स्यात् वृत्ते वाच्ये । 'वृत्तं पद्ये चरित्रे च' इत्यमरः । ननु इत्रप्रत्यये चरित्रमित्युक्तं ततश्च प्रज्ञादण्णि चारित्रमिति सिद्धौ किमनेनेति चेत् । मैवम् । स्वरे विशेषात् ॥—**अशि**—। अशू व्याप्तावेवमादिभ्य इत्रः, त्रैङ् पालने एवमादिभ्य उत्रश्च स्यात् ॥—**वहित्रमिति** । वह प्रापणे ॥—**धरित्रीति** । धृञ् धारणे गौरादित्वात् ङीष् ॥—**अमेः**—। अम गतौ अस्मादित्रः स्यात्स च चित् । उत्रस्तु नानुवर्तते अस्वरितत्वात् । मित्रं नेति विग्रहे त्वमित्रमिति नपुंसकम् ॥—**आः**—। इण् गतौ । अस्मादाप्रत्यये गुणे समयादेशः ॥—**कषेरिति** । कष खषेति दण्डकः । समयानिकषाशब्दौ समीपवाचकौ । बाहुलकात् दुषेः दोषा । दिवेराप्रत्यये बाहुलकादेवास्य गुणाभावे दिवा । खदेराप्रत्यये बाहुलकादेव धातोर्धान्तादेशश्च । स्वधेत्यादि ॥—**चितेः**—। चिती संज्ञानेऽस्मात्कणः प्रत्ययः स्यात्पश्चान्तादेशः । अमरोक्तमाह—**चिक्कणमिति** ॥ **सूचेः**—। सूच पैशुन्ये चुरादिरस्मात्स्मन् णिलोपः । कुत्वषत्वे । 'सूक्ष्मं स्यात्कण्टकेऽध्यात्मे पुंस्यणौ त्रिषु चाल्पके' इति मेदिनी ॥—**पातेः**—। पा रक्षणेऽस्मात् डुम्सुन्स्यात् डित्त्वाट्टिलोपः । उकार उच्चारणार्थ इत्युज्ज्वलदत्तः । वस्तुतस्तूगित्कार्यार्थः । सुपुंसीति 'उगितश्च' इति ङीप् । नकारः स्वरार्थः 'पुंसोऽसुङ्' इति सूत्रे न्यासरक्षिताभ्यां पुनातेर्मक्सुन् ह्रस्वश्चेति पठितम् । पूञो डुम्सुन्नित्यन्ये । भाष्ये तु सूतेः सप्रत्यये पुमानित्युक्तम् । 'उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः' इति तत्त्वम् ॥—**रुचि**—। रुच दीप्तावभिप्रीतौ च, भुज पालनादौ । 'भुजिष्यस्तु स्वतन्त्रे च हस्तसूचकयोः स्त्रियां । दासीगणिकयोः' इति मेदिनी ॥—**वसेः**—। वस निवासे, वस आच्छादने । 'वस्तिर्द्वयोर्निरूढे नाभ्यधोभूमिदशासु च' इति मेदिनी ॥—**शास इति** । शासु अनुशिष्टौ ॥—**अस्यतीति** । असु क्षेपणे । 'अगस्तिः कुम्भयोनौ च वङ्गसेनतरौ पुमान्' इति मेदिनी ॥—**सावसेः** । अस् भुवि अस्मात्सावुपपदे तिः स्यात् । बहुलवचनान्न भूभावः ॥—**वौ**—। तसु उपक्षयेऽस्माद्विपूर्वात्तिः स्यात् । 'अङ्गुष्ठे सकनिष्ठे स्याद्वितस्तिर्द्वादशाङ्गुलः' इत्यमरः । 'स्त्रीपुंसयोर्वितस्तिः स्यात्' इत्यमरमाला ॥ —**पदि**—। पद गतौ, प्रथ प्रख्याने, आभ्यां तिः स्यात्स च नित् ॥—**पत्तिरिति** । पदातिः ॥—**प्रथितिरिति** । प्रख्यातिः ॥—

६३३ । तितुत्रेष्वग्रहादीनामितीट् दृणातेर्ह्रस्वश्च ॥ दृतिः । ६३४ । कृतृकृपिभ्यः कीटन् ॥ किरीटं शिरोवेष्टनम् । तिरीटं सुवर्णम् । कृपीटं कुक्षिवारिणोः । ६३५ । रुचिवचिकुचिकुटिभ्यः कितच् ॥ रुचितमिष्टम् । उचितम् । कुचितं परिमितम् । कुटितं कुटिलम् । ६३६ । कुटिकुषिभ्यां क्मलन् ॥ कुड्मलम् । कुष्मलम् । ६३७ । कुषेर्लश्च ॥ कुल्मलं पापम् । ६३८ । सर्वधातुभ्योऽसुन् ॥ चेतः । सरः । पयः । सदः । ६३९ । रपेरत एच्च ॥ रेपोऽवद्यम् । ६४० । अशेर्देवने युट् च ॥ देवने स्तुतौ । यशः । ६४१ । उब्जेर्बले बलोपश्च ॥ ओजः । ६४२ । श्वेः संप्रसारणं च ॥ शवः । शवसी । बालपर्यायोऽयम् । ६४३ । श्रयतेः स्वाङ्गे शिरः किच्च ॥ श्रयतेः शिरआदेशोऽसुन् किच्च । शिरः । शिरसी । ६४४ । अर्तेरुच्च ॥ उरः । ६४५ । व्याधौ शुट् ॥ अर्शो गुदव्याधिः । ६४६ । उदके नुट् च ॥ अर्तेरसुन् स्यात्तस्य च नुट् । अर्णः । अर्णसी । ६४७ । इण आगसि ॥ एनः । ६४८ । रिचेर्धने घिच्च ॥ चात्प्रत्ययस्य नुट् । घित्वा-

---

**तितुत्रेष्विति** । ग्रहादित्वादिडागमनिषेधो नेति भावः ॥—**दृणातेः** । दृ विदारणे । अस्मात्तिः स्याद्धातोर्ह्रस्वत्वं च । 'दृतिश्चर्मपुटे मत्स्ये ना' इति मेदिनी ॥—**कृतृ–**। कॄ विक्षेपे, तॄ प्लवनतरणयोः, कृपू सामर्थ्ये । 'किरीटं मुकुटे न स्त्री' इति हेमचन्द्रः । 'गोमी कृपीटमुदरे नीरे' इति विश्वः । दशपाद्यां तु कृतृकृपिकपिभ्य इति पठित्वा कम्पीट इति चतुर्थमुदाहृतम् 'कृपो रो लः' इत्यत्र न्यासे तु कृकृपिभ्यामिति पठ्यते । अतस्तरतिरत्र प्रक्षिप्त इति कश्चित् । 'तरतेश्चेति पृथक्पठित्वा तिरीटः कूलवृक्ष' इति कश्चिद्व्याख्यत् ॥—**रुचिवचि–**। रुच दीप्तावभिप्रीतौ च, वच परिभाषणे, कुच शब्दे तारे, अथवा कुच कौटिल्याल्पीभावयोः । इकः कित्त्वात्सूत्रे नलोपेन निर्देशः । कुट कौटिल्ये ॥—**उचितमिति** । 'वचिस्वपि–' इत्यादिना संप्रसारणम् ॥—**कुटिकुषि–**। 'कुड्मलो मुकुले पुंसि न द्वयोर्नरकान्तरे' इति मेदिनी ॥ कुष निष्कर्षे । कुष्मलं छर्दनम् । विकसितमित्यन्ये ॥—**सर्वधातुभ्योऽसुन्** । दशपाद्यां तु असुन्नित्येव सूत्रम् । चिती संज्ञाने, चित संचेतने चुरादिः, सृगतौ गौरादित्वान्ङीष् । 'सरसी तु महासरः' इति शब्दार्णवः । महान्ति सरांसि सरस्य इति भाष्यम् । पय गतौ, पीङ् पाने । 'पयः स्यात् क्षीरनीरयोः' इति मेदिनी । षद्लृ विशरणादौ । सदः सभा । वर्च दीप्तौ । 'वर्चो नपुंसकं रूपे विष्ठायामपि तेजसि । पुंसि चन्द्रस्य तनये' इति मेदिनी । रुदिर् अश्रुविमोचने । 'रोदश्च रोदसी चापि दिवि भूमौ पृथक् पृथक् । सहप्रयोगेऽप्यनयो रोदस्यावपि रोदसी' इति विश्वः । वी गत्यादिषु । 'वयः पक्षिणि बाल्यादौ यौवने च नपुंसकम्' इति मेदिनी । अन प्राणने । अनो भक्तम् । 'अनोऽश्मायःसरसां जातिसंज्ञयोः' इति टचि तु अदन्तम् । 'पाकस्थानं महानसम्' इत्यमरः । तमु ग्लानौ । 'तमः क्लीबं गुणे शोके सैंहिकेयान्धकारयोः' इति रभसः । 'तमो ध्वान्ते गुणे शोके क्लीबं वा ना विधुंतुदे' इति मेदिनी । षह मर्षणे, 'सहो बले ज्योतिषि च पुंसि हेमन्तमार्गयोः' इति मेदिनी । तप संतापे । 'तपो लोकान्तरेऽपि च । चान्द्रायणादौ धर्मे च पुमान् शिशिरमाघयोः' इति । मह पूजायाम् । 'मह उत्सवतेजसोः' इति मेदिनी ॥–नभ हिंसायां भौवादिकः क्रैयादिकश्च । 'नभोऽन्तरिक्षं गगनम्' इत्यमरः । 'नभं तु नभसा सार्धं तपं तु तपसा सह । सहं च सहसा सार्धं महं च महसा सह । तमेन च तमः प्रोक्तं रजेनापि रजः समम्' इति द्विरूपकोशः । नन्वसुन्प्रत्यये नभः सहस्तम इत्यादिसान्तशब्दाः सिध्यन्ति पचाद्यचि तु नभं सहं तमं इत्याद्यजन्ता अपि सिध्यन्ति परन्तु रज इति अकारान्तसकारान्तौ नलोपवच्छब्दौ न सिध्यत इति 'रजेनापि रजः समम्' इति कोशश्चिन्त्य एवेति चेदत्राहुः । रञ्ज रागेऽस्मादसुनि 'भूरञ्जिभ्यां कित्' इति वक्ष्यमाणेनासुनः कित्त्वान्नलोपे रज इति सिध्यति । 'घञर्थे कविधानम्' इति कप्रत्यये तु रज इत्यदन्तोऽपि सिध्यतीति ॥—**रपेः–**। रप व्यक्तायां वाचि, अस्मादसुन् स्यादत एकारश्च ॥—**रेपोऽवद्यमिति** । 'अरेपसा तन्वा' इति मन्त्रे भाष्ये उक्तं नञ्पूर्वकरेपःशब्दस्यानवद्यवाचकत्वात् ॥—**अशेः–**। अशू व्याप्तौ संघाते च अस्मादसुन्स्याद्धातोर्युडागमश्च । यशः कीर्तिः ॥—**उब्जेः–**। उब्ज आर्जवे अस्मादसुन् स्याद्बले वाच्ये बकारस्य लोपश्च । 'ओजो दीप्ताववष्टम्भे प्रकाशबलयोरपि' इति मेदिनी ॥—**श्वेः–**। टुओश्वि गतिवृद्ध्योः अस्मादसुन्स्यात्संप्रसारणं च ॥—**श्रयतेः–**। श्रिञ् सेवायामस्मात्स्वाङ्गे वाच्येऽसुन्स्यात्स च किद्धातोः शिरादेशश्च । 'उत्तमाङ्गं शिरः शीर्षम्' इत्यमरः । घञर्थे कप्रत्यये तु शिर इत्यदन्तोऽपि शिरोवाची । 'शिरोऽदन्तो रजोवाची रजस्तथा' इति कोशान्तरम् । 'पिण्डं दद्याद्गयाशिरे' इति वायुपुराणे । 'कुण्डलोद्घृष्टगण्डानां कुमाराणां तरस्विनाम् । निचकर्त शिरान्द्रौणिर्नालेभ्य इव पङ्कजान्' इति महाभारतम् ॥—**अर्तेः–**। ऋ गतावस्मादसुन् कित्स्याद्धातोरुत्वं च । रपरत्वम् । 'उरो वत्सं च वक्षश्च' इत्यमरः ॥—**व्याधौ–**। अर्तेरेव व्याधौ वाच्येऽसुन् तस्य शुडागमश्च स्यात् ॥—**अर्ण इति** । पानीयमित्यर्थः ॥—**इणः–**। इण् गतौ अस्मात्पापे वाच्येसुन् स्यात्तस्य नुडागमश्च । एनः पापम् ॥—**रिचेः–**। रिचिर् विरेचने, रिच वियोजनसंपर्चनयोरित्यस्माद्वा धने वाच्येऽसुन् ॥—**रेक्ण इति** । 'चजोः–' इति कुत्वे 'अट्कुप्वाङ्–' इति णत्वम् । इह दशपादीवृत्तौ नुटं नानुवर्त्य रेकः रेकसी इत्युदाहृतम् । तन्न । उत्तरसूत्रे नुडनुवृत्तेर्निर्विवादत्वात् मण्डूकप्लुतौ मानाभावाल्लक्ष्यविसंवादाच्च । उज्ज्वलदत्तेन तु रिचेर्धने चित्किच्चेति पठि-

रकुत्वम् । रेक्णः सुवर्णम् । ६४९ । **चायतेरन्ने ह्रस्वश्च** ॥ चनो भक्तम् । ६५० । **वृङ्शीङ्भ्यां रूपस्वाङ्गयोः पुट् च** ॥ वर्पो रूपम् । शेपो गुह्यम् । ६५१ । **स्रुरीभ्यां तुट् च** ॥ स्रोतः । रेतः । ६५२ । **पातेर्बले जुट् च** ॥ पाजः । पाजसी । ६५३ । **उदके थुट् च** ॥ पाथः । ६५४ । **अन्ने च** ॥ पाथो भक्तम् । ६५५ । **अदेर्नुम् धौ च** ॥ अदेर्भक्ते वाच्येऽसुन् नुमागमो धादेशश्च । अन्धोऽन्नम् । ६५६ । **स्कन्देश्च स्वाङ्गे** ॥ स्कन्दः । स्कन्दसी । ६५७ । **आपः कर्माख्यायाम्** ॥ कर्माख्यायां ह्रस्वो नुट् च वा । अप्नः । अपः । बाहुलकात् । आपः । आपसी । ६५८ । **रूपे जुट् च** ॥ अब्जो रूपम् । ६५९ । **उदके नुम्भौ च** ॥ अम्भः । ६६० । **नहेर्दिवि भश्च** ॥ नभः । ६६१ । **इण आग अपराधे च** ॥ आगः पापापराधयोः । ६६२ । **अमेर्हुक्च** ॥ अंहः । ६६३ । **रमेश्च** ॥ रंहः । ६६४ । **देशे ह च** ॥ रमन्तेऽस्मिन् रहः । ६६५ । **अञ्च्यञ्जियुजिभृजिभ्यः कुश्च** ॥ एभ्योऽसुन् कवर्गश्चान्तादेशः । अङ्कश्चिह्नशरीरयोः । अङ्गः पक्षी । योगः समाधिः । भर्गस्तेजः । ६६६ । **भूरञ्जिभ्यां कित्** ॥ भुवः । रजः । ६६७ ।

त्वा नुटं चानुवर्त्य कित्त्वाद्गुणाभावे नुटश्रुत्वेन नकारे रिक्ममिति साधितं तल्लोकवेदयोरप्रसिद्धत्वादुपेक्ष्यम् । 'नित्यं रेक्णो अमर्त्यः' 'परिषद्यं ह्यरणस्य रेक्णः' 'रेक्णः स्वत्यभि या वाममेति' इत्यादिमन्त्रेषु रेक्ण इति शब्दस्य प्रसिद्धत्वात् । वैदिकनिघण्टौ च सुवर्णपर्यायेषु तथापाठात् वेदभाष्ये तु प्रकृतसूत्रेणैव तस्य साधितत्वाच्च रेक्ण इति प्रयोग एव साधीयानिति दिक् ॥—**चायतेः**—। चायृ पूजानिशामनयोः अस्मादन्ने वाच्येऽसुन्स्यात्तस्य नुट् च धातोर्ह्रस्वत्वं च यलोपः । 'चनो दधिष्व पचतः' 'सुते दधिष्व नश्चनः' इत्यादिमन्त्रेषु प्रसिद्धोऽयं चनशब्दः । एतेन चणोऽन्नमित्युदाहृत्य बाहुलकाण्णत्वमिति वदन्तो दशपादीवृत्तिकारास्तदनुसारिणः प्रसादकारादयश्च परास्ताः ॥—**वृङ्**—। वृङ् संभक्तौ, शीङ् स्वप्ने, आभ्यां यथाक्रमं रूपे स्वाङ्गे च वाच्येऽसुन्स्यात्तस्य पुडागमश्च ॥—**वर्पो रूपमिति** । 'ग्नन् छिश्नदेवाँअभिवर्पसाभूत्' इत्यादिमन्त्रेषु प्रसिद्धमिदम् । 'शेपः स्याद्वृषणं पेलम्' इति सुभूतिचन्द्रः । अकारान्तोऽप्ययम् । शेपपुच्छलाङ्गूलेषु शुनः' इति वार्तिके शेप इति निर्देशात् 'यस्यामुशन्तः प्रहराम शेपम्' इति वैदिकप्रयोगाच्च ॥—**स्रुरीभ्याम्**—। स्रु गतौ, रीङ् श्रवणे, आभ्यामसुन् तस्य तुट् च स्यात् । 'स्रोतोऽम्बुवेगेन्द्रिययोः' इति विश्वः । 'रेतः शुक्रे पारदे च' इति मेदिनी ॥—**पातेः**—। पा रक्षणेऽस्माद्बले वाच्येऽसुन् जुडागमश्च वर्गतृतीयादिः । पुट् चेत्यन्तस्यादिपाठस्तूज्ज्वलदत्तस्य प्रामादिकः । 'पृथुपाजा अमर्त्यः' इत्यादिमन्त्रतद्भाष्यविरोधात् ॥—**उदके**—। पातेरुदके वाच्येऽसुन्स्यात्तस्य थुडागमश्च । 'कबन्धमुदकं पाथः' इत्यमरः ॥—**अदेः**—। अद भक्षणे । 'भिस्सा स्त्री भक्तमन्धोऽन्नम्' इत्यमरः । 'द्विजातिशेषेण यदेतदन्धसा' इति भारविः ॥—**स्कन्देः**—। स्कन्दिर् गतिशोषणयोः । अस्मात्स्वाङ्गे वाच्येऽसुन्धश्चान्तादेशः ॥—**आपः**—। आप्लृ व्याप्तौ । अस्मात्कर्माख्यायामसुन् ह्रस्वश्च धातोः । प्रत्ययस्य नुडागमस्तु वा स्यात् । 'अप्नस्वतीमश्विना' 'अपांसि यस्मिन्नधि संदधुः' ॥—**बाहुलकादिति** । उपलक्षणं ह्रस्वनुटौ वा स्त इति व्याख्यानस्यापि संभवात् । तथा च ब्रुवते 'कतमोऽपि नपुंसकमाप' इति कोशमुदाहृत्य 'सर्वमापोमयं जगत्' इति प्रयोगो दुर्घटवृत्तौ समर्थितः ॥—**रूपे**—। रूपे वाच्ये आप्नोतेरसुन् ह्रस्वत्वं च धातोः प्रत्ययस्य जुडागमश्च स्यात् ॥—**अब्ज इति** । 'झलां जश् झशि' इति पकारस्य बकारः ॥ **उदके**—। उदके वाच्ये आप्नोतेरसुन् ह्रस्वत्वं च नुमागमो भश्चान्तादेशः ॥—**नहेः**—। णह बन्धने अस्माद्गमने वाच्येऽसुन् भश्चान्तादेशः स्यात् । 'नभो व्योम्नि नभो मेघे श्रावणे च पतद्ग्रहे । घ्राणे मृणालसूत्रे च वर्षासु च नभः स्मृतम्' इति विश्वः । 'नभः खं श्रावणो नभाः' इत्यमरः । 'नभं तु निभसा सार्धम्' इति द्विरूपकोशादकारान्तोऽपि ॥—**इणः**—। इणोऽसुन् स्यादपराधे वाच्ये धातोरागादेशश्च । विश्वोक्तिमाह—**आग इति** ॥—**अमेः**—। अम गत्यादौ । अस्मादसुन् हुगागमश्च धातोः स्यात् । अमन्ति गच्छन्त्यनेनाधस्तादित्यंहो दुरितम् ॥—**रमेश्च** । रमेरसुन् स्यात् । हुगागमश्च धातोः । रंहो वेगः । अहिरहिभ्यामसुना सिद्धे अघिरघिभ्यामसुनि अङ्घो रङ्घ इति माभूदिति सूत्रद्वयमिति गोवर्धनः । तथा च 'स्यान्मध्योष्मचतुर्थत्वमंहसो रंहसस्तथा' इति द्विरूपकोशः । एवं च 'दत्तार्घाः सिद्धसङ्घैर्विदधतु घृणयः शीघ्रमङ्घोविघातम्' इति 'रङ्घःसङ्घः सुराणां जगदुपकृतये नित्ययुक्तस्य यस्य स्तौति प्रीतिप्रसन्नोऽन्वहमहिमरुचेः सोऽवतात्स्यन्दनो वः' इत्यत्र अङ्घो रङ्घ इति घकारपाठोऽनुप्रासरसिकानां प्रामादिक इति वदन्ति ॥—**देशे**—। देशे वाच्ये रमेरसुन् हकारश्चान्तादेशः स्यात् । 'रहस्तत्त्वे रते गुह्ये' इति मेदिनी ॥—**अञ्चि**—। अञ्चु गतिपूजनयोः, अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु, युजिर् योगे, युज समाधौ, भृजी भर्जने, अङ्कः अङ्कसी अङ्कांसि । अङ्गः अङ्गसी अङ्गांसि । योगः योगसी योगांसि ॥—**भर्गस्तेज इति** । 'हरः स्मरहरो भर्गः' इत्यत्र तु भर्गशब्दो घञन्तः पुंलिङ्ग इति बोध्यः । उच समवायेऽस्मादसुनि बाहुलकात्कुत्वम् । न्यङ्क्वादित्वाद्वा । 'ओक आश्रयमात्रेऽपि मन्दिरेऽपि नपुंसकम्' इति मेदिनी ॥—**भूरञ्जि**—। भू सत्तायाम्, रञ्ज रागे, आभ्यामसुन्कित्स्यात् । भुवः अन्तरिक्षम् । षष्ठ्यन्तप्रतिरूपकमव्ययमिदम् । रजो रेणुः । 'रजः क्लीवं गुणान्तरे । आर्तवे च परागे च रेणुमात्रेऽपि दृश्यते' इति मेदिनी । घञर्थे कप्रत्यये तु अका-

**वसेर्णित्** ॥ वासो वस्त्रम् । ६६८ । **चन्देरादेश्च छः** ॥ छन्दः । ६६९ । **पचिवचिभ्यां सुट् च** ॥ पक्षसी तु स्मृतौ पक्षौ । वक्षो हृदयम् । ६७० । **वहिहाधाञ्भ्यश्छन्दसि** ॥ वक्षाः अनड्वान् । हासाश्चन्द्रः । धासाः पर्वत इति प्राञ्चः । वस्तुतस्तु णिदित्यनुवर्तते न तु सुट् । तेन वहेरुपधावृद्धिः । इतरयोः 'आतो युक्–२७६१' इति युक् । शोणा धृष्णू नृवाहसा । श्रोता हवं गृणतः स्तोमवाहाः । विश्वो विहायाः । वाजम्भरो विहायाः । देवो न यः पृथिवीं विश्वधायाः । अधारयत् पृथिवीं विश्वधायसम् । धर्णसिं भूरिधायसमित्यादिः । ६७१ । **इण आसिः** ॥ अयाः वह्निः । स्वरादिपाठादव्ययत्वम् । ६७२ । **मिथुनेऽसिः पूर्ववच्च सर्वम्** ॥ उपसर्गविशिष्टो धातुर्मिथुनं तत्रासुनोऽपवादोऽसिः । स्वरार्थः । ६७३ । **नञि हन एह च** ॥ अनेहाः । अनेहसौ । ६७४ । **विधाञो वेध च** ॥ विदधातीति वेधाः । ६७५ । **नुवो धुट् च** ॥ नोधाः । ६७६ । **गतिकारकोपपदयोः पूर्वपदप्रकृतिस्वरत्वं च** ॥ असिः स्यात् । सुतपाः । जातवेदाः । 'गतिकारकोपपदात् कृत् ३८७३' इत्युत्तरपदप्रकृतिस्वरत्वे सति शेषस्यानुदात्तत्वे प्राप्ते तदपवादार्थमिदम् । ६७७ । **चन्द्रे मो डित्** ॥ चन्द्रोपपदान्माङोऽसिः स्यात्स च डित् । चन्द्रमाः । ६७८ । **वयसि धाञः** ॥ वयोधास्तरुणः । ६७९ । **पयसि च** ॥ पयोधाः समुद्रो मेघश्च । ६८० । **पुरसि च** ॥ पुरोधाः । ६८१ । **पुरूरवाः** ॥ पुरुशब्दस्य दीर्घो रौतेरसिश्च निपात्यते । ६८२ । **चक्षेर्बहुलं शिच्च** ॥ नृचक्षाः । ६८३ । **उषः कित्** ॥ उषः । ६८४ । **दमेरुनसिः** ॥ सप्तार्चिर्दमुनाः । ६८५ । **अङ्गतेरसिरि रुडागमश्च** ॥ अङ्गिराः । ६८६ । **सर्तेरप्पूर्वादसिः** ॥ अप्सराः । प्रायेणायं भूम्नि । अप्सरसः । ६८७ । **विदिभुजिभ्यां**

रान्तोऽप्ययम् । 'रजोऽयं रजसा सार्धं स्त्रीपुष्पगुणधूलिषु' इत्यजयकोशः ॥—**वसेः**–। वस निवासेऽस्मादसुन् स्यात्स च णित् । णित्वाद्वृद्धिः ॥—**चन्देः** । चदि आह्लादने अस्मादसुन् आदेः छकारश्च । 'छन्दः पद्यप्रभेदेऽपि स्वैराचाराभिलाषयोः' इति मेदिनी । अकारान्तोऽप्ययम् । 'अभिप्रायवशौ छन्दौ' इत्यमरद्विरूपकोशौ ॥—**पचि**–। डुपचष् पाके, वच परिभाषणे, आभ्यामसुन् स्यात्तस्य सुडागमश्च । चस्य कुत्वे सस्य षत्वम् । पक्षः पक्षसी पक्षांसि । 'यथा शालायै पक्षसी' इति श्रुतिः । 'पूर्वोत्तरे द्वे पक्षसी' इति श्रुतिः । 'पूर्वोत्तरे द्वे पक्षसी' इति अनीकाधिकरणे शावरभाष्यम् । माधवस्तु पक्ष परिग्रह इत्यस्मादसुन् इत्याह ॥—**वहि** । वह प्रापणे, ओहाक् त्यागे, डुधाञ् धारणादौ, एभ्योऽसुन् स्यात् । अत्र पूर्वसूत्रात्सुटमनुवर्तयतामुज्ज्वलदत्तादीनां मतेनोदाहरणमाह । वक्षाः हासाः धासाः इति ॥—**प्राञ्च इति** । सकलवृत्तिकृतः प्रसादकारादयश्चेत्यर्थः । एतच्चायुक्तम् । उक्तोदाहरणानि हि लोके न दृश्यन्ते न वा संभवन्ति । सूत्रेऽस्मिन् छन्दसीत्युक्तत्वात् । वेदे तु विपरीतान्येवोदाहरणानि दृश्यन्त इत्याह—**वस्तुतस्त्विति** । वेदभाष्यकारादयश्चेहानुकूला इत्यवधेयम् ॥—**इणः**–। इण् गतौ अस्मादासिः स्यात् ॥—**मिथुने**–। सुयशा इति 'अशेर्देवने युट् च' इत्यादि पूर्ववत् । सुपयाः सुस्रोता इत्याद्युदाहार्यम् ॥—**नञि**–। हन्तेर्नञ्युपपदेऽसिः स्यात् धातोरेहादेशश्च 'ऋदुशनस्पुरुदंस–' इत्यादिना सावनङ् ॥—**विधाञः**–। डुधाञ् धारणादौ विपूर्वादस्मादसिः स्याद्वेधादेशश्च सोपसर्गधातोः । 'वेधाः पुंसि हृषीकेशे बुधे च परमेष्ठिनि' इति मेदिनी ॥—**नुवः**–। णु स्तुतौ अस्मादसिः स्यात्तस्य धुडागमश्च ॥—**नोधा इति** । 'सद्यो भुवद्वीर्याय नोधाः' इति मन्त्रे नोधा ऋषिर्भवतीति निरुक्तम् । नवं दधातीति तु नैरुक्तं व्युत्पत्त्यन्तरं बोध्यम् ॥—**गति**–। गतौ कारके चोपपदेऽसिः स्यात् । तप संतापे, विद ज्ञाने, विदॢ लाभे ॥—**चन्द्रे**–। चन्द्रं रजतममृतं च तदिव मीयते असौ चन्द्रमा इति हरदत्तः । स च डिदिति डित्त्वाट्टिलोपे चन्द्रमसौ चन्द्रमस इत्यादि सिध्यति ॥—**वयसि**–। डुधाञ् धारणे अस्माद्वयस्युपपदेऽसिः स्यात्स च डित् ॥—**पयोधा इति** । पयःशब्द उपपदे डुधाञः पूर्ववत् ॥—**पुरसि च** । पुरःशब्द उपपदे पूर्ववत् । 'पुरोधास्तु पुरोहितः' इत्यमरः ॥—**रौतेरिति**–। रु शब्दे । 'पुरूरवा बुधसुतो राजर्षिश्च पुरूरवाः' इत्यमरः ॥—**चक्षेः**–। चक्षिङ् व्यक्तायां वाचि अस्मादसिः स्यात्स च बहुलं शित् । शित्त्वात्सार्वधातुकसंज्ञायां ख्याञ् न । नृचक्षाः राक्षसाः । शित्त्वाभावपक्षे तु ख्याञादेशः । प्रख्याः प्रजापतिः ॥—**उषः**–। उष दाहेऽस्मादसिः स्यात्स च कित् । उषः प्रभातम् । दशपाद्यां तु वसः किदिति पाठः । वसति सूर्येण सहेति उषा देवताविशेषः । 'अपो भि' इति सूत्रे 'उषसश्चेष्यते' इति वार्तिकस्य समुषद्भिरित्युदाहरणं विवृण्वद्भिरयं पाठः पुरस्कृतः ॥—**दमेः**–। दमु उपशमे । 'सप्तार्चिर्दमुनाः शुक्रः' इत्यमरः ॥ पक्षे 'अन्येषामपि दृश्यते' इति दीर्घः । 'जुष्टो दमूनाः' 'दमूनसं गृहपतिं वरेण्यम्' । दशपाद्यां तु 'दमेरूनसिः' इति सूत्र एव दीर्घः पठ्यते तन्मते बाहुलकाद्ध्रस्वो बोध्यः । अगिर्गत्यर्थः । अङ्गिरा ऋषिभेदः ॥—**सर्तेः**–। सृ गतौ ॥—**प्रायेणेति** । 'स्त्रियां बहुष्वप्सरसः स्यादेकत्वेऽप्सरा' इति शब्दार्णवः ॥ 'अप्सरस्स्वप्सराः प्रोक्ता सुमनाः सुमनस्सु च' इति द्विरूपकोशः । 'एकाप्सरःप्रार्थितयोर्विवादः' इति रघुः ॥—**विदि**–। विद ज्ञाने, भुज पालनाभ्यवहारयोः, आभ्यां विश्वशब्दे उपपदेऽसिः स्यात् ॥ शब्दस्वरूपपरत्वाद्विश्वे इत्यत्र स्मिन्नादेशो न कृतः । उदाहरणे विश्वं वेत्ति भुङ्क्ते इति विग्रहः । यत्तु 'तत्पुरुषे कृति–' इति सप्तम्या अलुक् विश्वेवेदाः अग्निः विश्वेभोजाः

विश्वे ॥ विश्ववेदाः । विश्वभोजाः । ६८८ । वशेः कनसिः ॥ संप्रसारणम् । उशनाः ॥ ॥ इत्युणादिषु चतुर्थः पादः ॥

## पञ्चमः पादः ।

६८९ । अदि भुवो डुतच् ॥ अद्भुतम् । ६९० । गुधेरूमः ॥ गोधूमः । ६९१ । मसेरूरन् ॥ मसूरः । प्रथमे पादे असेरुरन्मसेश्चेत्यत्र व्याख्यातः । ६९२ । स्थः किच्च ॥ स्थूरो मनुष्यः । ६९३ । पातेरतिः ॥ पातिः स्वामी । संपातिः पक्षिराजः । ६९४ । वातेर्नित् ॥ वातिरादित्यसोमयोः । ६९५ । अर्तेश्च ॥ अरतिरुद्वेगः । ६९६ । तृहेः क्नो हलोपश्च ॥ तृणम् । ६९७ । वृञ्लुठितनिताडिभ्य उलच् तण्डश्च ॥ व्रियन्ते लुठ्यन्ते तन्यन्ते ताड्यन्त इति वा तण्डुलाः । ६९८ । दंसेष्टटनौ न आ च ॥ दासः सेवकशूद्रयोः । ६९९ । दंशेश्च ॥ दाशो धीवरः । ७०० । उदि चेर्डसिः ॥ स्वरादिपाठादव्ययत्वम् । उच्चैः । ७०१ । नौ दीर्घश्च ॥ नीचैः । ७०२ । सौ रमेः क्तो दमे पूर्वपदस्य च दीर्घः ॥ रमेः सुपूर्वाद्दमे वाच्ये क्तः स्यात् । कित्वादनुनासिकलोपः । सूरत उपशान्तो दयालुश्च । ७०३ । पूञो यण् णुक् ह्रस्वश्च ॥ यत्प्रत्ययः । पुण्यम् । ७०४ । स्रंसेः शिः कुट् किच्च ॥ स्रंसतेः शिरादेशः यत्प्रत्ययः कित्तस्य कुडागमश्च । शिक्यम् । ७०५ । अर्तेः क्युरुच्च ॥ उरणो मेषः । ७०६ । हिंसेरीरन्नीरचौ ॥ हिंसीरो व्याघ्रदुष्टयोः । ७०७ । उदि दृणातेरजलौ पूर्वपदान्त्यलोपश्च ॥ उदरम् । ७०८ । डित् खनेर्मुट् स चोदात्तः ॥ अच् अल च डित्स्याद्धातोर्मुट् स चोदात्तः । मुखम् । ७०९ । अमेः सन् ॥ अंसः । ७१० । मुहेः खो मूर्च ॥ मूर्खः । ७११ । नहेर्हलोपश्च ॥ नखः । ७१२ । शीङो ह्रस्वश्च ॥ शिखा । ७१३ । माङ ऊखो मय् च ॥ मयूखः । ७१४ । कलिगलिभ्यां फगस्योच्च ॥ कुल्फः शरीरावयवो रोगश्च । गुल्फः पादग्रन्थिः । ७१५ । स्पृशेः श्वण्शुनौ पृ च ॥ श्वण्शुनौ प्रत्ययौ पृ इत्यादेशः । पार्श्वोऽस्त्री कक्षयोरधः । पर्शुरायुधम् । ७१६ । श्मनि श्रयतेर्डुन् ॥ श्मन्शब्दो मुखवाची ।

---

इन्द्र इत्युज्ज्वलदत्तेनोक्तं तन्न । तथा सति स्मिन्नादेशस्य दुर्वारत्वापत्तेः । 'सुमृळीको भवतु विश्ववेदाः' 'पूषाभगः प्रभृथे विश्वभोजाः' इत्यादिमन्त्रेषु सुपो लुक एव दर्शनात् वृत्तौ तथैवोदाहरणाच्च ॥—**वशेः**—। वश कान्तौ 'उशना भार्गवः कविः' इत्यमरः ॥ ॥ **इत्युणादिषु चतुर्थः पादः** ॥

**अदि भुवो**—। अत इत्यव्ययम् । आकस्मिकार्थेऽस्मिन्नुपपदे भूधातोर्डुतच्स्यात् डित्वाट्टिलोपः । अद्भुतमाश्चर्यम् ॥—**गुधेः**—। गुध परिवेष्टने गुध्यते परिवेष्ट्यते पाणिभिरिति । 'गोधूमो नागरङ्गे स्यादोषधीव्रीहिभेदयोः' इति मेदिनी ॥—**मसेः**—। मसी परिणामे ॥—**स्थः**—। ष्ठा गतिनिवृत्तावस्मादूरन् कित्त्वादालोपः ॥— **स्थूरो मनुष्य इति** । 'स्थूरस्य रायो बृहतो य ईशे' इति मन्त्रे तु योगपुरस्कारात्स्थिरस्येत्यर्थ इति व्याख्यातम् ॥—**पातेः**—। पा रक्षणे ॥—**वातेः**—। वा गतिगन्धनयोः ॥ रभसकोशस्थमाह—**वातिरिति** ॥—**अर्तेः**—। ऋ गतौ, अस्मादतिः स्यात स च नित् ॥—**तृहेः**—। तृह हिंसायाम्, क्नस्य कित्त्वाद्गुणाभावः ॥—**वृञ्**—। वृञ् वरणे, लुठ विलोडने, तनु विस्तारे, तड आघाते, चुरादिः एभ्य उलच् स्यात् तण्डादेशश्च धातोः । यद्यपि 'सानसिपर्णसि' इति सूत्रे तण्डुलशब्दो निपातितस्तथापि प्रत्ययस्वरेण मध्योदात्तः सः, अयं तु चित्स्वरेणान्तोदात्त इति विवेकः ॥—**दंसेः**—। दसि दंशनदर्शनयोः अस्माट्टटनौ स्यातां नकारस्याकारश्च । टनो नकार आद्युदात्तार्थः । 'दासः शूद्रे दानपात्रे भृत्यधीवरयोरपि' इति विश्वः ॥—**दंशेः**—। दंश दशनेऽस्मादपि टटनौ स्तो नकारस्य चात्वं स्यात् । 'कैवर्ते दाशधीवरौ' इत्यमरः ॥—**उदि**—। चिञ् चयने । डैसो डित्त्वाट्टिलोपः ॥—**सौ**—। रमु क्रीडायाम् । **पूञः**—। पूञ् पवने । 'पुण्यं मनोज्ञेऽभिहितं तथा सुकृतधर्मयोः' इति विश्वः ॥—**स्रंसेः**—। स्रंसु अधःपतने कित्त्वं तु गुणाभावार्थम् ॥— **अर्तेः**—। ऋ गतावस्मात्क्युप्रत्ययः स्याद्धातोरुत्वं च रपरत्वम् 'युवोरनाकौ' । 'मेढ्रोरभ्रोरणोर्णायुमेषवृष्णय एडके' इत्यमरः ॥—**हिंसेः**—। हिसि हिंसायाम् ॥—**उदि**—। दॄ विदारणे ॥—**डित्खनेः**—। खनु अवदारणे, अस्मादजलौ स्तः । 'मुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपि । सन्ध्यन्तरे नाटकादेः शब्देऽपि च नपुंसकम्' इति मेदिनी ॥—**अमेः**—। अम गतौ, 'स्कन्धो भुजशिरोंसोऽस्त्री' इत्यमरः । 'अंसः स्कन्धे विभागे च' इति दन्त्यान्ते विश्वः ॥—**मुहेः**—। मुह वैचित्त्येऽस्मात्खप्रत्ययो धातोर्मुरादेशश्च । मुह्यतीति मूर्खः । 'अज्ञे मूढयथाजातमूर्खवैधेयबालिशाः' इत्यमरः ॥—**नहेः**—। णह बन्धने । अस्मात्खः । 'नखं करुहे षण्ढे गन्धद्रव्ये नखं नखी' इति विश्वः । 'नखी स्त्रीक्लीबयोः शुक्तौ नखरे पुंनपुंसकम्' इति मेदिनी ॥—**शीङः**—। शीङ् स्वप्नेऽस्मात्खः स्याद्धातोर्ह्रस्वश्च । ह्रस्वविधानसामर्थ्याद्गुणाभावः । 'शिखा शाखा बर्हिचूडालाङ्गलिक्यप्रमात्रके । चूडामात्रे शिफायां च ज्वालायां प्रपदेऽपि च' इति मेदिनी ॥—**माङः**—। माङ् माने । 'मयूखस्त्विट्करज्वालासु' इत्यमरः ॥ —**कलि**—। कल शब्दसंख्यानयोः, गल अदने, आभ्यां फक् स्यात् धातोरकारस्योत्वं च ॥—**गुल्फ इति** । 'तद्ग्रन्थी घुटिके गुल्फौ' इत्यमरः । तयोः पादयोर्ग्रन्थी इत्यर्थः ॥ स्पृश संस्पर्शे, 'पार्श्वं कच्छधरे चक्रोपान्तपर्शुगणेऽपि च' इति विश्वमेदिन्यौ ॥ —**श्मनि**—। श्रिञ् सेवायामस्मात् श्मन्युपपदे डुन्स्यात् डित्त्वाट्टिलोपः । 'तद्वृद्धौ श्मश्रु पुंमुखे' इत्यमरः । पुरुषस्य मुखे तेषां

**२०६९ दामन्यादित्रिगर्तषष्ठाच्छः** ५।३।११६॥ दामनि औलपि वैजवापि औदकि औदङ्कि अच्युतन्ति ( आच्युतन्ति ) अच्युतदन्ति ( आच्युतदन्ति ) शाकुन्तकि आकिदन्ति औडवि काकदन्तकि शात्रुंतपि सार्वसेनि बिन्दु वैन्दवि तुलभ मौञ्जायन काकन्दि सावित्रीपुत्र ॥ **इति दामन्यादिः** ॥ १९२ ॥

**२०७० पर्श्वादियौधेयादिभ्योऽणञौ** ५।३।११७॥ (१) पर्शु असुर रक्षस् बाह्लीक वयस वसु मरुत् सत्त्वत् दशार्ह पिशाच अशनि कार्षापण ॥ **इति पर्श्वादिः** ॥ १९३ ॥ (२) यौधेय कौशेय शौक्रेय शौभ्रेय धार्तेय घार्तेय ज्यावाणेय त्रिगर्त भरत उशीनर ॥ **इति यौधेयादिः** ॥ १९४ ॥

**२०७५ स्थूलादिभ्यः प्रकारवचने कन्** ५।४।३॥ स्थूल अणु माषेषु ( माष इषु ) कृष्ण तिलेषु । यव व्रीहिषु । इक्षु तिल । पाद्यकालावदातसुरायाम् । गोमूत्र आच्छादने । सुरा अहौ । जीर्णशालिषु । पत्रमूल समस्तो व्यस्तश्च । कुमारीपुत्र कुमारीश्वशुर मणि ॥ **इति स्थूलादिः** ॥ १९५ ॥

**२०९७ यावादिभ्यः कन्** ५।४।२९॥ याव मणि अस्थि तालु जानु सान्द्र पीत स्तम्ब । ऋता उष्णशीते । पशौ लून-विपाते । अण्ड निपुणे । पुत्र कृत्रिमे । स्नात वेदसमाप्तौ । शून्य रिक्ते । दान कुत्सिते । तनु सूत्रे । ईयसश्च । ज्ञात अज्ञात । कुमारीक्रीडनकानि च ( कुमारक्रीडनकानि च ) ॥ **इति यावादिः** ॥ १९६ ॥

**२१०२ विनयादिभ्यष्ठक्** ५।४।३४॥ विनय समय । उपायो ह्रस्वत्वं च । संप्रति संगति कथंचित् अकस्मात् समाचार उपचार समाय ( समयाचार ) व्यवहार संप्रदान समुत्कर्ष समूह विशेष अत्यय ॥ **इति विनयादिः** ॥ १९७ ॥

**२१०६ प्रज्ञादिभ्यश्च** ५।४।३८॥ प्रज्ञ वणिज् उशिज् उष्णिज् प्रत्यक्ष विदस् विदन् षोडन् विद्या मनस् । श्रोत्र शरीरे । जुह्वत् । कृष्ण मृगे । चिकीर्षत् । चोर शत्रु योध चक्षुस् वसु [ एनस् ] मरुत् क्रुञ्च सत्वत् दशार्ह वयस् [व्याकृत] असुर रक्षस् पिशाच अशनि कार्षापण देवता बन्धु ॥ **इति प्रज्ञादिः** ॥ १९८ ॥

**२१११ ❀ आद्यादिभ्य उपसंख्यानम् ❀** ५।४।४४॥ आदि मध्य अन्त पृष्ठ पार्श्व ॥ **इत्याद्यादिराकृतिगणः** ॥ १९९ ॥

**८७७ अव्ययीभावे शरत्प्रभृतिभ्यः** ५।४।१०७॥ शरद् विपाश् अनस् मनस् उपानह् अनडुह् दिव् हिमवत् हिरुक् विद् सद् दिश् दृश् विश् चतुर् त्यद् तद् यद् एतद् कियत् । जराया जरस् च । प्रतिपरसमनुभ्योऽक्ष्णः । पथिन् ॥ **इति शरदादिः** ॥ २०० ॥

**८६७ द्विदण्ड्यादिभ्यश्च** ५।४।१२८॥ द्विदण्डि द्विमुसलि उभाञ्जलि उभयाञ्जलि उभादन्ति उभयादन्ति उभाहस्ति उभयाहस्ति उभाकर्णि उभयाकर्णि उभापाणि उभयापाणि उभाबाहु उभयाबाहु एकपदि प्रोष्ठपदि आढ्यपदि ( आढ्यपदि ) सपदि निकुच्यकर्णि संहतपुच्छि अन्तेवासि ॥ **इति द्विदण्ड्यादिः** ॥ २०१ ॥

**८७७ पादस्य लोपोऽहस्त्यादिभ्यः** ५।४।१३८॥ हस्तिन् कुद्दाल अश्व कशिक कुरुत कटोल कटोलक गण्डोल गण्डोलक कण्डोल कण्डोलक अज कपोत जाल गण्ड महिला दासी गणिका कुसूल ॥ **इति हस्त्यादिः** ॥ २०२ ॥

**८७८ कुम्भपदीषु च** ५।४।१३९॥ कुम्भपदी एकपदी जालपदी शूलपदी मुनिपदी गुणपदी शतपदी सूत्रपदी गोधापदी कलशीपदी विपदी तृणपदी द्विपदी त्रिपदी षट्पदी दासीपदी शितिपदी विष्णुपदी सुपदी निष्पदी आर्द्रपदी कुणिपदी कृष्णपदी शुचिपदी द्रोणीपदी ( द्रोणपदी ) द्रुपदी सूकरपदी शकृत्पदी अष्टापदी स्थूणापदी अपदी सूचीपदी ॥ **इति कुम्भपद्यादिः** ॥ २०३ ॥

**८७९ उरःप्रभृतिभ्यः कप्** ५।४।१५१॥ उरस् सर्पिस् उपानह् पुमान् अनड्वान् पयः नौः लक्ष्मीः दधि मधु शाली शालिः । अर्थान्नञः ॥ **इत्युरःप्रभृतयः** ॥ २०४ ॥

---

## षष्ठोऽध्यायः ।

**७९ ❀ शकन्ध्वादिषु पररूपं वाच्यम् ❀** ६।१।९४॥ शकन्धुः कर्कन्धुः कुलटा । सीमन्तः केशवेशे । हलीषा मनीषा लाङ्गलीषा पतञ्जलिः । सारङ्गः पशुपक्षिणोः ॥ **इति शकन्ध्वादिः** ॥ २०५ ॥

**१०७१ पारस्करप्रभृतीनि च संज्ञायाम्** ६।१।१५७॥ पारस्करो देशः । कारस्करो वृक्षः । रथस्या नदी । किष्कुः प्रमाणम् । किष्किन्धा गुहा । तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च । प्रात्तुम्पतौ गवि कर्तरि ॥ **इति पारस्करादिः** ॥ २०६ ॥

**३६८१ उञ्छादीनां च** ६।१।१६०॥ उञ्छ म्लेच्छ जञ्ज जल्प ( जल्प ) जप वध । युग कालविशेषे रथाद्युपकरणे च । गरो दूष्ये ( गरो द्रूष्ये ) । वेदवेगवेष्टबन्धाः करणे । स्तुयुद्रुवश्छन्दसि । वर्तनि स्तोत्रे । श्वभ्रे दरः । साम्वतापौ भावगर्हायाम् । उत्तमशश्वत्तमौ सर्वत्र । भक्षमन्थभोगमन्थाः ॥ **इत्युञ्छादिः** ॥ २०७ ॥

**३६९१ वृषादीनां च** ६।१।२०३॥ वृषः जनः ज्वरः ग्रहः हयः मयः गयः तायः तयः चयः अमः वेदः सूदः अंशः गुहा। शमरणौ संज्ञायां संमतौ भावकर्मणोः। मन्त्रः शान्तिः कामः यामः आरा धारा कारा वहः कल्पः पादः॥ **इति वृषादिराकृतिगणः॥** अविहितलक्षणमाद्युदात्तत्वं वृषादिषु ज्ञेयम्॥ २०८॥

**३७५८ विस्पष्टादीनि गुणवचनेषु** ६।२।२४॥ विसष्ट विचित्र विचित्त व्यक्त संपन्न पटु पण्डित कुशल चपल निपुण॥ **इति विस्पष्टादिः॥ २०९॥**

**३७७१ कार्तकौजपादयश्च** ६।२।३७॥ कार्तकौजपौ सावर्णिमाण्डकेयौ ( सावर्णिमाण्डूकेयौ ) अवन्त्यश्मकाः पैलश्यापर्णेयाः कपिश्यापर्णेयाः शैतिकाक्षपाञ्चालेयाः कटुकवाधूलेयाः शाकलशुनकाः शाकलशणकाः शणकबाभ्रवाः आर्चाभिमौद्गलाः कुन्तिसुराष्ट्राः चिन्तिसुराष्ट्राः तण्डवतण्डाः अविमत्तकामविद्धाः बाभ्रवशालङ्कायनाः बाभ्रवदानच्युताः कठकालापाः कठकौथुमाः कौथुमलौकाक्षाः स्त्रीकुमारम् मौदपैप्पलादाः वत्सजरन्तः सौश्रुतपार्थिवाः जरामृत्यू याज्यानुवाक्ये॥ **इति कार्तकौजपादिः॥ २१०॥**

**३७७६ कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपापारेवडवातैतिलकद्रूः पण्यकम्बलोदासीभाराणां च** ६।२।४२॥ दासीभारः देवहूतिः देवभीतिः देवलातिः वसुर्नीतिः ( वसूनितिः ) औषधिः चन्द्रमाः॥ **इति दासीभारादिराकृतिगणः॥ २११॥**

**३७१५ युक्तारोह्यादयश्च** ६।२।८१॥ युक्तारोही आगतरोही आगतयोधी आगतवञ्ची आगतनन्दी आगतप्रहारी आगतमत्स्यः क्षीरहोता भगिनीभर्ता ग्रामगोधुक् अश्वत्रिरात्रः गर्गत्रिरात्रः व्युष्टित्रिरात्रः गणपादः एकशितिपाद्। पात्रेसमितादयश्च॥ **इति युक्तारोह्यादिराकृतिगणः॥ २१२॥**

**३८१९ घोषादिषु च** ६।२।८५॥ घोष घट (कट) वल्लभ हृद वदरी पिङ्गल ( पिङ्गली ) पिशङ्ग माला रक्षा शाला ( वृद्द ) कूट कूटशाल्मली अश्वत्थ तृण शिल्पी मुनि प्रेक्षाक् ( प्रेक्षा )॥ **इति घोषादिः॥ २१३॥**

**३८२० छात्र्यादयः शालायाम्** ६।२।८६॥ छात्रि पेलि भाण्डि व्याडि आखण्डि आटि गोमि॥ **इति छात्र्यादिः॥ २१४॥**

**३८२१ प्रस्थेऽवृद्धमकर्क्यादीनाम्** ६।२।८७॥ कर्कि ( कर्की ) मघ्नी मकरी कर्कन्धु शमी करीरि (करीर) कन्दुक कुवल ( कवल ) वदरी॥ **इति कर्क्यादिः॥ २१५॥**

**३८२२ मालादीनां च** ६।२।८८॥ माला शाला शोणा ( शोण ) द्राक्षा स्राक्षा क्षामा काञ्ची एक काम॥ **इति मालादिः॥ २१६॥**

**३८५२ क्रत्वादयश्च** ६।२।११८॥ क्रतु दृशीक प्रतीक प्रतूर्ति हव्य भव्य भग॥ **इति क्रत्वादिः॥ २१७॥**

**३८५९ आदिश्चिहणादीनाम्** ६।२।१२५॥ चिहण मदुर मद्धुर वैतुल पटत्क वैडालिकर्णक वैडालिकर्णि कुक्कुट चिक्कण चित्कण॥ **इति चिहणादिः॥ २१८॥**

**३८६५ वर्ग्यादयश्च** ६।२।१३१॥ दिगादिषु वर्ग्यादयस्त एव दन्ता वर्ग्यादयः॥ २१९॥

**३८६८ चूर्णादीन्यप्राणिषष्ठ्याः** ६।२।१३४॥ चूर्ण करिष करीष शाकिन शाकट द्राक्षा तूस्त कुन्दम दलप चमसी चक्कन चौल॥ **इति चूर्णादिः॥ २२०॥**

**३८७४ उभे वनस्पत्यादिषु युगपत्** ६।२।१४०॥ वनस्पतिः बृहस्पतिः शचीपतिः तनूनपात् नराशंसः शुनःशेपः शण्डामर्कौ तृष्णावरूत्री लम्बाविश्ववयसौ मर्मृत्युः॥ **इति वनस्पत्यादिः॥ २२१॥**

**३८८० संज्ञायामनाचितादीनाम्** ६।२।१४६॥ आचित पर्याचित आस्थापित परिगृहीत निरुक्त प्रतिपन्न अपश्लिष्ट प्रश्लिष्ट उपहित उपस्थित संहितागवि॥ **इत्याचितादिः॥ २२२॥**

**३८८१ प्रवृद्धादीनां च** ६।२।१४७॥ प्रवृद्धं यानम्। प्रवृद्धो वृषलः। प्रयुता सूष्णवः। आकर्षे अवहितः। अवहितो भोगेषु। खट्वारूढः। कविशस्तः॥ **इति प्रवृद्धादिः॥ २२३॥ आकृतिगणोऽयम्॥** तेन। प्रवृद्धं यानम्। अप्रवृद्धो वृषक्तो रथ इत्यादि॥

**३८९४ कृत्योकेष्णुच्चार्वादयश्च** ६।१।१६० चारु साधु यौधिक ( यौधकि ) अनङ्गमेजय वदान्य अकस्मात्। वर्तमानवर्धमानत्वरमाणध्रियमाणक्रियमाणरोचमानशोभमानाः संज्ञायाम्। विकारसदृशे। व्यस्तसमस्ते। गृहपति गृहपतिक। राजाह्नोश्छन्दसि॥ **इति चार्वादिः॥ २२४॥**

**३९१० नगुणादयोऽवयवाः** ६।२।१७६॥ गुण अक्षर अध्याय सक्त छन्दोमान॥ **इति गुणादिराकृतिगणः॥ २२५॥**

**३९१८ निरुदकादीनि च** ६।२।१८४॥ निरुदक निरुपल निर्मक्षिक निर्मशक निष्कालक निष्कालिक निष्पेष दुस्तरीप निस्तरीप निरजिन उदजिन उपाजिन। परेर्हस्तपादकेशकर्षाः॥ **इति निरुदकादिराकृतिगणः॥ २२६॥**

**३९२७ प्रतेरंश्वादयस्तत्पुरुषे** ६।२।१९३॥ अंशु जन [ राजन् ] उग्र खेटक अजिर आर्द्रा श्रवण कृत्तिका अर्धपुर ॥ **इत्यंश्वादिः ॥ २२७ ॥**

**३९२८ उपाद्यजजिनमगौरादयः** ६।२।१९४॥ गौर तैप तैल लेट लोट जिह्वा कृष्ण कन्या गुध कल्प पाद ॥ **इति गौरादिः ॥ २७८ ॥**

६२९ ❀ **त्रिचक्रादीनां छन्दस्युपसंख्यानम्** ❀ ६।२।१९९ ॥ त्रिचक्र त्रिवृत् त्रिवङ्कर ॥ **इति त्रिचक्रादिराकृतिगणः ॥ २२९ ॥**

८३१ **स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्समानाधिकरणे स्त्रियामपूरणीप्रियादिषु** ६।३।३४ ॥ प्रिया मनोज्ञा कल्याणी सुभगा दुर्भगा भक्तिः सचिवा स्वसा (स्वा) कान्ता [क्षान्ता] समा चपला दुहिता वामा अबला तनया ॥ **इति प्रियादिः ॥ २३० ॥**

८३६ **तसिलादिष्वाकृत्वसुचः** ६।३।३५ ॥ तसिल् त्रत् तरप् तमप् चरट् जातीयर् कल्पप् देशीयर् रूपप् पाशप् थल् थाल् दार्हिल् तिल् थ्यन् ॥ **इति तसिलादयः ॥ २३१ ॥**

८३६ ❀ **कुक्कुट्यादीनामण्डादिषु** ❀ ६।३।४२ ॥ कुक्कुटी मृगी काकी अण्ड पद शाव भ्रकुंस भृकुटी ॥ **इति कुक्कुट्यादिरण्डादिश्च ॥ २३२ ॥ २३३ ॥**

**१०३४ पृषोदरादीनि यथोपदिष्टम्** ६।३।१०९ ॥ पृषोदर पृषोत्थान बलाहक जीमूत श्मशान उलूखल पिशाच बृसी मयूर ॥ **इति पृषोदरादिराकृतिगणः ॥ २३४ ॥**

**१०३८ वानगिर्योः संज्ञायां कोटरकिंशुलुकादीनाम्** ६।३।११७ ॥ (१) कोटर मिश्रक सिध्रक पुरग सारिक ( शारिक ) ॥ **इति कोटरादिः ॥ २३५ ॥** (२) किंशुलुक शाल्व नड अञ्जन भञ्जन लोहित कुक्कुट ॥ **इति किंशुलुकादिः ॥ २३६ ॥**

**१०४१ मतौ बह्वचोऽनजिरादीनाम्** ६।३।११९ ॥ अजिर खदिर पुलिन हंसक (हंस) कारण्ड ( कारण्डव ) चक्रवाक ॥ **इत्यजिरादिः ॥ २३७ ॥**

**१०४२ शरादीनां च** ६।३।१२० ॥ शर वंश धूम अहि कपि मणि मुनि शुचि हनु ॥ **इति शरादिः ॥ २३८ ॥**

**१०४३ ❀ अपील्वादीनामिति वक्तव्यम्** ❀ ६।३।१२१ ॥ पीलु दारु रुचि चारु गम् कम् ॥ **इति पील्वादिः॥२३९॥**

**१३११ बिल्वकादिभ्यश्छस्य लुक्** ६।४।१५३ ॥ छविधानार्थं ये नडादयस्ते यदा छसंनियोगे कृतकुगागमास्ते **बिल्वकादयः ॥ २४० ॥ इति षष्ठोऽध्यायः ।**

---

## सप्तमोऽध्यायः ।

**३५७१ स्नात्व्यादयश्च** ७।१।४९॥ स्नात्वी पीत्वी ॥ **इति स्नात्व्यादिराकृतिगणः ॥ २४१ ॥**

**१३८६ द्वारादीनां च** ७।३।४ ॥ द्वार स्वर स्वाध्याय व्यल्कश स्वस्ति स्वर् स्फ्यकृत् स्वादु मृदु श्वस् श्वन् स्व ॥ **इति द्वारादिः ॥ २४२ ॥**

**१५४९ स्वागतादीनां च** ७।३।७ ॥ स्वागत स्वध्वर स्वङ्ग व्यङ्ग व्यड व्यवहार स्वपति ॥ **इति स्वागतादिः ॥ २४३ ॥**

**१४३८ अनुशतिकादीनां च** ७।३।२० ॥ अनुशतिक अनुहोड अनुसंवरण ( अनुसंचरण ) अनुसंवत्सर अङ्गारवेणु असिहत्य [अस्यहत्य] अस्यहेति वध्योग पुष्करसद् अनुहरत् कुरुकत कुरुपञ्चाल उदकशुद्ध इहलोक परलोक सर्वलोक सर्वपुरुष सर्वभूमि प्रयोग परस्त्री । राजपुरुषात्ष्यञि । सूत्रनड ॥ **इत्यनुशतिकादिराकृतिगणोऽयम् ॥ २४४ ॥ तेन ।** अभिगम अधिभूत अधिदेव चतुर्विद्या इत्यादि ॥

**४६४ ❀ क्षिपकादीनां चोपसंख्यानम्** ❀ ७।३।४५ ॥ क्षिपका ध्रुवका चरका सेवका करका चटका अवका लहका अलका कन्यका ध्रुवका एडका ॥ **इति क्षिपकादिराकृतिगणः ॥ २४५ ॥**

**२८६४ न्यङ्क्वादीनां च** ७।३।५३॥ न्यङ्कु मद्गु भृगु दूरेपाक बलेपाक क्षणेपाक दूरेपाका फलेपाका दूरेपाकु फलेपाकु तक्र ( तत्र ) वक्र ( चक्र ) व्यतिषङ्ग अनुषङ्ग अवसर्ग उपसर्ग श्वपाक मांसपाक ( मासपाक ) मूलपाक कपोतपाक उलूकपाक । संज्ञायां मेघनिदाघावदाघार्घाः । न्यग्रोध वीरुत् ॥ **इति न्यङ्क्वादिः ॥ २४६ ॥**

२५७२ / २५८३ } ❀ **कणादीनां चेति वक्तव्यम्** ❀ ७।४।३ ॥ कण रण भण श्रण लुप हेठ ह्वाथि वाणि ( चाणि ) लोठि ( लोठि ) लोपि ॥ **इति कणादिः ॥ २४७ ॥ सप्तमोऽध्यायः ।**

---

## अष्टमोऽध्यायः ।

**३९३४ तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः** ८।१।२७ ॥ गोत्र ब्रुव प्रवचन प्रहसन प्रकथन प्रत्ययन प्रपञ्च प्राय न्याय प्रचक्षण विचक्षण अवचक्षण स्वाध्याय भूयिष्ठ वानाम ॥ **इति गोत्रादिः** ॥ २४८ ॥

**३९७४ पूजनात्पूजितमनुदात्तं काष्ठादिभ्यः** ८।१।६७ ॥ काष्ठ दारुण अमातापुत्र वेश अनाज्ञात अनुज्ञात अपुत्र अयुत अद्भुत अनुक्त भृश घोर सुख परम सु अति ॥ **इति काष्ठादिः** ॥ २४९ ॥

**१८९७ मादुपधायाश्च मतोर्वोऽयवादिभ्यः** ८।२।९ ॥ यव दल्मि ऊर्मि ( उर्मि ) भूमि कृमि क्रुञ्चा वशा द्राक्षा ध्राक्षा ध्रजि व्रजि ध्वजि निजि सिजि सञ्जि हरित् ककुद् मरुत् गरुत् इक्षु द्रु मधु ॥ **इति यवादिराकृतिगणः** ॥ २५० ॥

**१७२ ❀ अहरादीनां पत्यादिषूपसंख्यानम्** ❀ ८।२।७० ॥ १ अहर् गीर् धुर् ॥ **इत्यहरादिः** ॥ २५१ ॥ २ पति गण पुत्र ॥ **इति पत्यादिः** ॥ २५२ ॥

**१४४ कस्कादिषु च** ८।३।४८ ॥ कस्कः कौतस्कुतः भ्रातुष्पुत्रः शुनस्कर्णः सद्यस्कालः सद्यस्क्रीः साद्यस्कः कांस्कान् सर्पिष्कुण्डिका धनुष्कपालम् बहिष्पलम् ( बर्हिष्पलम् ) यजुष्पात्रम् अयस्कान्तः तमस्काण्डः अयस्काण्डः मेदस्पिण्डः भास्करः अहस्करः ॥ **इति कस्कादिराकृतिगणः** ॥ २५३ ॥

**१०२२ सुषामादिषु च** ८।३।९८॥ सुषामा निःषामा दुःषामा । सुषेधः निषेधः (निःषेधः) दुःषेधः सुषंधिः निःषंधिः दुःषंधिः सुष्टु दुष्टु । गौरिषक्थः संज्ञायाम् । प्रतिष्णिका जलाषाहम् ( जलाषाडम् ) नौषेचनम् दुन्दुभिषेवणम् ( दुन्दुभिषेचनम् )। एति संज्ञायामगात् । नक्षत्राद्वा । हरिषेणः रोहिणीषेणः ॥ **इति सुषामादिराकृतिगणः** ॥ २५४ ॥

**३१६८ न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम्** ८।३।११० ॥ सवने सवने । सूते सूते । सोमे सोमे । सवनमुखे सवनमुखे । किंसं किंसम् ( किंसः किंसः ) अनुसवनमनुसवनम् । गोसनिं गोसनिम् । अश्वसनिमश्वसनिम् । **पाठान्तरम्** । सवनेसवने । सवनमुखे सवनमुखे । अनुसवनमनुसवनम् । संज्ञायां बृहस्पतिसवः । शकुनिसवनम् । सोमे सोमे । सुते सुते । संवत्सरे संवत्सरे । बिसं बिसम् । किसं किसम् । मुसलं मुसलम् । गोसनिम् अश्वसनिम् ॥ **इति सवनादिः** ॥ २५५ ॥

**१०५१ ❀ इरिकादिभ्यः प्रतिषेधो वक्तव्यः** ❀ ८।४।६ ॥ इरिका मिरिका तिमिरा ॥ **इतीरिकादिराकृतिगणः** ॥ २५६ ॥

**१०५६ ❀ वाप्रकरणे गिरिनद्यादीनां वोपसंख्यानम्** ८।४।१० ॥ गिरिनदी गिरिनख गिरिनद्ध गिरिनितम्ब चक्रनदी चक्रनितम्ब तूर्यमान माषोन आर्गयन ॥ **इति गिरिनद्यादिराकृतिगणः** ॥ २५७ ॥

**७९२ क्षुभ्नादिषु च** ८।४।३९ ॥ क्षुभ्न नृनमन नन्दिन् नन्दन नगर । एतान्युत्तरपदानि संज्ञायां प्रयोजयन्ति । हरिनन्दी हरिनन्दनः गिरिनगरम् । नृतिर्यङि प्रयोजयन्ति । नरीनृत्यते । नर्तन गहन नन्दन निवेश निवास अग्नि अनूप । एतान्युत्तरपदानि प्रयोजयन्ति । परिनर्तनम् परिगहनम् परिनन्दनम् शरनिवेशः शरनिवासः शराग्निः दर्भानूपः । आचार्यादणत्वं च ॥ **आकृतिगणोऽयम्** ॥ **पाठान्तरम्** ॥ क्षुभ्ना तृप्नु नृनमन नरनगर नन्दन । यङ्नृती । गिरिनदी गृहगमन निवेश निवास अग्नि अनूप आचार्यभोगीन चतुर्हायन । इरिकादीनि वनोत्तरपदानि संज्ञायाम् । इरिका तिमिर समीर कुबेर हरि कर्मार ॥ **इति क्षुभ्नादिः** ॥ २५८ ॥

**इति श्रीपाणिनिमुनिप्रणीतो गणपाठः समाप्तः ।**

---

# अथ धातुपाठः ।

**येनाक्षरसमाम्नायमधिगम्य महेश्वरात् । कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥**
**वाक्यकारं वररुचिं भाष्यकारं पतञ्जलिम् । पाणिनिं सूत्रकारं च प्रणतोऽस्मि मुनित्रयम् ॥**

१ भू सत्तायाम् ॥ **उदात्तः परस्मैभाषः** ॥ २ एध वृद्धौ । ३ स्पर्ध संघर्षे । ४ गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च । ५ बाधृ लोडने । ६ नाथृ ७ नाधृ याच्ञोपतापैश्वर्याशीःषु । ८ दध धारणे । ९ स्कुदि आप्रवणे । १० श्विदि श्वैत्ये । ११ वदि अभिवादनस्तुत्योः । १२ भदि कल्याणे सुखे च । १३ मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु । १४ स्पदि किंचिच्चलने । १५ क्लिदि परिदेवने । १६ मुद हर्षे । १७ दद दाने । १८ ष्वद १९ स्वर्द आस्वादने । २० उर्द माने क्रीडायां च । २१ कुर्द २२ खुर्द २३ गुर्द २४ गुद क्रीडायामेव । २५ षूद क्षरणे । २६ ह्राद अव्यक्ते शब्दे । २७ ह्लादी सुखे च । २८ स्वाद आस्वादने । २९ पर्द कुत्सिते शब्दे । ३० यती प्रयत्ने । ३१ युतृ ३२ जुतृ भासने । ३३ विथृ ३४ वेथृ याचने । ३५ श्रथि शैथिल्ये । ३६ ग्रथि कौटिल्ये । ३७ कत्थ श्लाघायाम् ॥ **एधादय उदात्ता अनुदात्तेत आत्मनेभाषाः** ॥ ३८ अत सातत्यगमने । ३९ चिती संज्ञाने । ४० च्युतिर् आसेचने । ४१ श्च्युतिर् क्षरणे । ४२ मन्थ विलोडने । ४३ कुथि ४४ पुथि ४५ लुथि ४६ मथि हिंसासंक्लेशनयोः । ४७ षिध गत्याम् । ४८ षिधू शास्त्रे माङ्गल्ये च । ४९ खादृ भक्षणे । ५० खद स्थैर्ये हिंसायां च । ५१ बद स्थैर्ये । ५२ गद व्यक्तायां वाचि । ५३ रद विलेखने । ५४ णद अव्यक्ते शब्दे । ५५ अर्द गतौ याचने च । ५६ नर्द ५७ गर्द शब्दे । ५८ तर्द हिंसायाम् । ५९ कर्द कुत्सिते शब्दे । ६० खर्द दन्दशूके । ६१ अति ६२ अदि बन्धने । ६३ इदि परमैश्वर्ये ६४ विदि अवयवे । भिदि इत्येके ॥ ६५ गडि वदनैकदेशे । ६६ णिदि कुत्सायाम् । ६७ टुनदि समृद्धौ । ६८ चदि आह्लादे । ६९ त्रदि चेष्टायाम् । ७० कदि ७१ क्रदि ७२ क्लदि आह्वाने रोदने च । ७३ क्लिदि परिदेवने । ७४ शुन्ध शुद्धौ ॥ **अतादय उदात्ता उदात्तेतः परस्मैभाषाः** ॥ ७५ शीकृ सेचने । ७६ लोकृ दर्शने । ७७ श्लोकृ संघाते । ७८ द्रेकृ ७९ ध्रेकृ शब्दोत्साहयोः । ८० रेकृ शङ्कायाम् । ८१ सेकृ ८२ स्रेकृ ८३ स्रकि ८४ श्रकि ८५ श्लकि गतौ । ८६ शकि शङ्कायाम् । ८७ अकि लक्षणे । ८८ वकि कौटिल्ये । ८९ मकि मण्डने । ९० कक लौल्ये । ९१ कुक ९२ वृक आदाने । ९३ चक तृप्तौ प्रतिघाते च । ९४ ककि ९५ वकि ९६ श्वकि ९७ त्रकि ९८ ढौकृ ९९ त्रौकृ १०० ष्वष्क १०१ वस्क १०२ मस्क १०३ टिकृ १०४ टीकृ १०५ तिकृ १०६ तीकृ १०७ रघि १०८ लघि गत्यर्थाः ॥ तृतीयो दन्त्यादिरित्येके । लघि भोजननिवृत्तावपि । १०९ अघि ११० वघि १११ मघि गत्याक्षेपे । मघि कैतवे च । ११२ राघृ ११३ लाघृ ११४ द्राघृ सामर्थ्ये ॥ ध्राघृ इत्यपि केचित् । द्राघृ आयामे च । ११५ श्लाघृ कत्थने ॥ **शीकादय उदात्ता अनुदात्तेत आत्मनेभाषाः** ॥ ११६ फक्क नीचैर्गतौ । ११७ तक हसने । ११८ तकि कृच्छ्रजीवने । ११९ बुक्क भषणे । १२० कख हसने । १२१ ओखृ १२२ राखृ १२३ लाखृ १२४ द्राखृ १२५ ध्राखृ शोषणालमर्थयोः । १२६ शाखृ १२७ श्लाखृ व्याप्तौ । १२८ उख १२९ उखि १३० वख १३१ वखि १३२ मख १३३ मखि १३४ णख १३५ णखि १३६ रख १३७ रखि १३८ लख १३९ लखि १४० इख १४१ इखि १४२ ईखि १४३ वल्ग १४४ रगि १४५ लगि १४६ अगि १४७ वगि १४८ मगि १४९ तगि १५० त्वगि १५१ श्रगि १५२ श्लगि १५३ इगि १५४ रिगि १५५ लिगि गत्यर्थाः ॥ रिख त्रख त्रिखि शिखि इत्यपि केचित् । त्वगि कम्पने च । १५६ युगि १५७ जुगि १५८ बुगि वर्जने । १५९ घघ हसने । १६० मघि मण्डने । १६१ शिघि आघ्राणे ॥ **फक्कादय उदात्ता उदात्तेतः परस्मैभाषाः** ॥ १६२ वर्च दीप्तौ । १६३ षच सेचने सेवने च । १६४ लोचृ दर्शने । १६५ शच व्यक्तायां वाचि । १६६ श्वच १६७ श्वचि गतौ । १६८ कच बन्धने । १६९ कचि १७० काचि दीप्तिबन्धनयोः । १७१ मच १७२ मुचि कल्कने ॥ कथन इत्यन्ये ॥ १७३ मचि धारणोच्छ्रायपूजनेषु । १७४ पचि व्यक्तीकरणे । १७५ ष्टुच प्रसादे । १७६ ऋज गतिस्थानार्जनोपार्जनेषु । १७७ ऋजि १७८ भृजी भर्जने । १७९ एजृ १८० भ्रेजृ १८१ भ्राजृ दीप्तौ । १८२ ईज गतिकुत्सनयोः ॥ **वर्चादय उदात्ता अनुदात्तेत आत्मनेभाषाः** ॥ १८३ शुच शोके । १८४ कुच शब्दे तारे । १८५ कुञ्च १८६ क्रुञ्च कौटिल्याल्पीभावयोः । १८७ लुञ्च अपनयने । १८८ अञ्चु गतिपूजनयोः । १८९ वञ्चु १९० चञ्चु १९१ तञ्चु १९२ त्वञ्चु १९३ म्रुञ्चु १९४ म्लुञ्चु १९५ म्रुचु १९६ म्लुचु गत्यर्थाः । १९७ ग्रुचु १९८ ग्लुचु १९९ कुजु २०० खुजु स्तेयकरणे । २०१ ग्लुञ्च २०२ षस्ज गतौ । २०३ गुजि अव्यक्ते शब्दे । २०४ अर्च पूजायाम् । २०५ म्लेच्छ अव्यक्ते शब्दे । २०६ लछ २०७ लाछि लक्षणे । २०८ वाछि इच्छायाम् । २०९ आछि आयामे । २१० ह्रीछ लज्जायाम् । २११ हुर्छा कौटिल्ये । २१२ मुर्छा मोहसमुच्छ्राययोः । २१३ स्फुर्छा विस्तृतौ । २१४ युच्छ प्रमादे । २१५ उछि उञ्छे । २१६ उच्छी विवासे । २१७ ध्रज

२१८ ध्रजि २१९ धृज २२० धृजि २२१ ध्वज २२२ ध्वजि गतौ । २२३ कूज अव्यक्ते शब्दे । २२४ अर्ज २२५ षर्ज अर्जने । २२६ गर्ज शब्दे । २२७ तर्ज भर्त्सने । २२८ कर्ज व्यथने । २२९ खर्ज पूजने च । २३० अज गतिक्षेपणयोः । २३१ तेज पालने । २३२ खज मन्थे । २३३ खजि गतिवैकल्ये । २३४ एजृ कम्पने । २३५ टुओस्फूर्जा वज्रनिर्घोषे । २३६ क्षि क्षये । २३७ क्षीज अव्यक्ते शब्दे । २३८ लज २३९ लजि भर्जने । २४० लाज २४१ लाजि भर्त्सने च । २४२ जज २४३ जजि युद्धे । २४४ तुज हिंसायाम् । २४५ तुजि पालने । २४६ गज २४७ गजि २४८ गृज २४९ गृजि २५० मुज २५१ मुजि शब्दार्थाः । गज मदने च । २५२ वज २५३ व्रज गतौ ॥ **शुचादय उदात्ता उदात्तेतः ( क्षिवर्जं ) परस्मैभाषाः ॥** २५४ अट्ट अतिक्रमहिंसनयोः । २५५ वेष्ट वेष्टने । २५६ चेष्ट चेष्टायाम् । २५७ गोष्ट २५८ लोष्ट संघाते । २५९ घट्ट चलने । २६० स्फुट विकसने । २६१ अठि गतौ । २६२ वठि एकचर्यायाम् । २६३ मठि २६४ कठि शोके । २६५ मुठि पालने । २६६ हेठ विबाधायाम् । २६७ एठ च । २६८ हिडि गत्यनादरयोः । २६९ हुडि संघाते । २७० कुडि दाहे । २७१ वडि विभाजने । २७२ मडि च । २७३ भडि परिभाषणे । २७४ पिडि संघाते ॥ २७५ मुडि मार्जने । २७६ तुडि तोडने । २७७ हुडि वरणे ॥ हरणे इत्येके ॥ २७८ चडि कोपे । २७९ शडि रुजायां संघाते च । २८० तडि ताडने । २८१ पडि गतौ । २८२ कडि मदे । २८३ खडि मन्थे । २८४ हेडृ २८५ होडृ अनादरे । २८६ वाडृ आप्लाव्ये । २८७ द्राडृ २८८ ध्राडृ विशरणे । २८९ शाडृ श्लाघायाम् ॥ **अट्टादय उदात्ता अनुदात्तेत आत्मनेभाषाः ॥** २९० शौटृ गर्वे । २९१ यौटृ बन्धे । २९२ म्लेटृ २९३ म्रेडृ उन्मादे । २९४ कटे वर्षावरणयोः । चटे इत्येके ॥ २९५ अट २९६ पट गतौ । २९७ रट परिभाषणे । २९८ लट बाल्ये । २९९ शट रुजाविशरणगत्यवसादनेषु । ३०० वट वेष्टने । ३०१ किट ३०२ खिट त्रासे । ३०३ शिट ३०४ षिट अनादरे । ३०५ जट ३०६ झट संघाते । ३०७ भट भृतौ । ३०८ तट उच्छ्राये ३०९ खट काङ्क्षायाम् । ३१० णट नृतौ । ३११ पिट शब्दसंघातयोः । ३१२ हट दीप्तौ । ३१३ षट अवयवे । ३१४ लुट विलोडने ॥ डान्तोऽयमित्येके ॥ ३१५ चिट परप्रैष्ये । ३१६ विट शब्दे । ३१७ विट आक्रोशे । हिट इत्येके ॥ ३१८ इट ३१९ किट ३२० कटी गतौ । ३२१ मडि भूषायाम् । ३२२ कुडि वैकल्ये । ३२३ मुड ३२४ प्रुड मर्दने । ३२५ चुडि अल्पीभावे । ३२६ मुडि खण्डने ॥ पुडि चेत्येके ॥ ३२७ रुठि ३२८ लुठि स्तेये ॥ रुटि लुटि इत्येके । रुडि लुडि इत्यपरे ॥ ३२९ स्फुटिर् विशरणे ॥ स्फुटि इत्यपि केचित् ॥ ३३० पठ व्यक्तायां वाचि । ३३१ वठ स्थौल्ये । ३३२ मठ मदनिवासयोः । ३३३ कठ कृच्छ्रजीवने । ३३४ रठ परिभाषणे ॥ रट इत्येके ॥ ३३५ हठ प्लुतिशठत्वयोः ॥ बलात्कार इत्यन्ये ॥ ३३६ रुठ ३३७ लुठ ३३८ उठ उपघाते ॥ ऊठ इत्येके ॥ ३३९ पिठ हिंसासंक्लेशनयोः । ३४० शठ कैतवे च । ३४१ शुठ प्रतिघाते ॥ शुठि इति स्वामी ॥ ३४२ कुठि च । ३४३ लुठि आलस्ये प्रतिघाते च । ३४४ शुठि शोषणे । ३४५ रुठि ३४६ लुठि गतौ । ३४७ चुड्ड भावकरणे । ३४८ अड्ड अभियोगे । ३४९ कड्ड कार्कश्ये ॥ चुड्डादयस्त्रयो दोपधाः ॥ ३५० क्रीडृ विहारे । ३५१ तुडृ तोडने ॥ तूडृ इत्येके ॥ ३५२ हुडृ ३५३ हूडृ ३५४ होडृ गतौ । ३५५ रौडृ अनादरे । ३५६ रोडृ ३५७ लोडृ उन्मादे । ३५८ अड उद्यमे । ३५९ लड विलासे ॥ लल इत्येके ॥ ३६० कड मदे ॥ कडि इत्येके ॥ ३६१ गडि वदनैकदेशे ॥ **शौट्रादय उदात्ता उदात्तेतः परस्मैभाषाः ॥** ३६२ तिपृ ३६३ तेपृ ३६४ ष्टिपृ ३६५ ष्टेपृ क्षरणार्थाः । तेपृ कम्पने च ॥ ३६६ ग्लेपृ दैन्ये । ३६७ टुवेपृ कम्पने । ३६८ केपृ ३६९ गेपृ ३७० ग्लेपृ च । ३७१ मेपृ ३७२ रेपृ ३७३ लेपृ गतौ । ३७४ त्रपूष् लज्जायाम् । ३७५ कपि चलने । ३७६ रबि ३७७ लबि ३७८ अबि शब्दे । ३७९ लबि अवस्रंसने च । ३८० कबृ वर्णे । ३८१ क्लीबृ अधार्ष्ट्ये । ३८२ क्षीबृ मदे । ३८३ शीभृ कत्थने । ३८४ चीभृ च । ३८५ रेभृ शब्दे ॥ अभिरभी क्वचित्पठ्येते ॥ ३८६ ष्टभि ३८७ स्कभि प्रतिबन्धे । ३८८ जभी ३८९ जृभि गात्रविनामे । ३९० शल्भ कत्थने । ३९१ वल्भ भोजने । ३९२ गल्भ धार्ष्ट्ये । ३९३ श्रम्भु प्रमादे ॥ दन्त्यादिश्च ॥ ३९४ ष्टुभु स्तम्भे ॥ **तिप्यादय उदात्ता अनुदात्तेत आत्मनेभाषाः ॥ तिपिस्त्वनुदात्तः ॥** ३९५ गुपू रक्षणे । ३९६ धूप संतापे । ३९७ जप ३९८ जल्प व्यक्तायां वाचि । जप मानसे च । ३९९ चप सान्त्वने । ४०० षप समवाये । ४०१ रप ४०२ लप व्यक्तायां वाचि । ४०३ चुप मन्दायां गतौ । ४०४ तुप ४०५ तुम्प ४०६ त्रुप ४०७ त्रुम्प ४०८ तुफ ४०९ तुम्फ ४१० त्रुफ ४११ त्रुम्फ हिंसार्थाः । ४१२ पर्प ४१३ रफ ४१४ रफि ४१५ अर्ब ४१६ पर्ब ४१७ लर्ब ४१८ बर्ब ४१९ मर्ब ४२० कर्ब ४२१ खर्ब ४२२ गर्ब ४२३ शर्ब ४२४ पर्ब ४२५ चर्ब गतौ । ४२६ कुबि आच्छादने । लुबि ४२७ तुबि ४२८ अर्दने । ४२९ चुबि वक्त्रसंयोगे । ४३० पृभु ४३१ पृम्भु हिंसार्थौ ॥ षिभु षिम्भु इत्येके ॥ ४३२ शुभ ४३३ शुम्भ भाषणे ॥ भासन इत्येके । हिंसायामित्यन्ये ॥ **गुपादय उदात्ताः उदात्तेत परस्मैभाषाः ॥** ४३४ घिणि ४३५ घुणि ४३६ घृणि ग्रहणे । ४३७ घुण ४३८ घूर्ण भ्रमणे । ४३९ पण व्यवहारे स्तुतौ च । ४४० पन च । ४४१ भाम क्रोधे । ४४२ क्षमूष् सहने । ४४३ कमु कान्तौ ॥ **घिण्यादय उदात्ता अनुदात्तेत आत्मनेभाषाः ॥** ४४४ अण ४४५ रण ४४६ वण ४४७ भण ४४८ मण ४४९ कण ४५० क्वण ४५१ व्रण ४५२ भ्रण ४५३ ध्वण शब्दार्थाः ॥ धण इत्यपि केचित् ॥ ४५४ ओणृ अपनयने । ४५५

शोणृ वर्णगत्योः । ४५६ श्रोणृ संघाते । ४५७ श्लोणृ च । ४५८ पैणृ गतिप्रेरणश्लेषणेषु । ४५९ ध्रण शब्दे ॥ रण इत्यपि केचित् ॥ ४६० कनी दीप्तिकान्तिगतिषु । ४६१ ष्टन ४६२ वन शब्दे । ४६३ वन ४६४ षण संभक्तौ । ४६५ अम गत्यादिषु ४६६ द्रम ४६७ हम्म ४६८ मीमृ गतौ । ४६९ चमु ४७० छमु ४७१ जमु ४७२ झमु अदने । ४७३ क्रमु पादविक्षेपे ॥ **अणादय उदात्ता उदात्तेतः परस्मैभाषाः** ॥ ४७४ अय ४७५ वय ४७६ पय ४७७ मय ४७८ चय ४७९ तय ४८० णय गतौ । ४८१ दय दानगतिरक्षणहिंसादानेषु । ४८२ रय गतौ । ४८३ ऊयी तन्तुसंताने । ४८४ पूयी विशरणे दुर्गन्धे च । ४८५ क्नूयी शब्दे उन्दे च । ४८६ क्ष्मायी विधूनने । ४८७ स्फायी ४८८ ओप्यायी वृद्धौ । ४८९ तायृ संतानपालनयोः । ४९० शल चलनसंवरणयोः । ४९१ वल ४९२ वल्ल संवरणे संचरणे च । ४९३ मल ४९४ मल्ल धारणे । ४९५ भल ४९६ भल्ल परिभाषणहिंसादानेषु । ४९७ कल शब्दसंख्यानयोः । ४९८ कल्ल अव्यक्ते शब्दे ॥ अशब्द इति स्वामी ॥ ४९९ तेवृ ५०० देवृ देवने । ५०१ षेवृ ५०२ गेवृ ५०३ ग्लेवृ ५०४ पेवृ ५०५ मेवृ ५०६ म्लेवृ सेवने ॥ शेवृ खेवृ क्लेवृ इत्येके ॥ ५०७ रेवृ प्लवगतौ ॥ **अयादय उदात्ता अनुदात्तेत आत्मनेभाषाः** ॥ ५०८ मव्य बन्धने । ५०९ सूर्क्ष्य ५१० ईर्क्ष्य ५११ ईर्ष्य ईर्ष्यार्थाः । ५१२ हय गतौ । ५१३ शुच्य अभिषवे ॥ चुच्य इत्येके ॥ ५१४ हर्य गतिकान्त्योः । ५१५ अल भूषणपर्याप्तिवारणेषु ॥ अयं स्वरितेदित्येके ॥ ५१६ ञिफला विशरणे । ५१७ मील ५१८ श्मील ५१९ स्मील ५२० क्ष्मील निमेषणे । ५२१ पील प्रतिष्टम्भे । ५२२ नील वर्णे । ५२३ शील समाधौ । ५२४ कील बन्धने । ५२५ कूल आवरणे । ५२६ शूल रुजायां संघोषे च । ५२७ तूल निष्कर्षे । ५२८ पूल संघाते । ५२९ मूल प्रतिष्ठायाम् । ५३० फल निष्पत्तौ । ५३१ चुल्ल भावकरणे । ५३२ फुल्ल विकसने । ५३३ चिल्ल शैथिल्ये भावकरणे च । ५३४ तिल गतौ ॥ तिल्ल इत्येके ॥ ५३५ वेल्ल ५३६ चेल्ल ५३७ केल्ल ५३८ खेल्ल ५३९ क्ष्वेल्ल ५४० वेल्ल चलने । ५४१ पेल्ल ५४२ फेल्ल ५४३ शेल्ल गतौ । षेल्ल इत्येके ५४४ स्खल संचलने । ५४५ खल संचये । ५४६ गल अदने । ५४७ षल गतौ । ५४८ हल विशरणे । ५४९ श्वल ५५० श्वल्ल आशुगमने ५२१ खोल्ल ५५२ खोर्ऋ गतिप्रतिघाते । ५५३ धोर्ऋ गतिचातुर्ये । ५५४ त्सर छद्मगतौ । ५५५ क्मर हूर्च्छने । ५५६ अभ्र ५५७ वभ्र ५५८ मभ्र ५६९ चर गत्यर्थाः ॥ चरतिर्भक्षणेऽपि ॥ ५६० ष्ठिवु निरसने । ५६१ जि जये । ५६२ जीवप्राणधारणे । ५६३ पीव ५६४ मीव ५६५ तीव ५६६ णीव स्थौल्ये । ५६७ क्षिवु ५६८ क्षेवु निरसने । ५६९ उर्वी ५७० तुर्वी ५७१ थुर्वी ५७२ दुर्वी ५७३ धुर्वी हिंसार्थाः । ५७४ गुर्वी उद्यमाने । ५७५ मुर्वी बन्धने । ५७६ पूर्व ५७७ पर्व ५७८ मर्व पूरणे । ५७९ चर्व अदने । ५८० भर्व हिंसायाम् । ५८१ कर्व ५८२ खर्व ५८३ गर्व दर्पे । ५८४ अर्व ५८५ शर्व ५८६ षर्व हिंसायाम् ५८७ । इवि व्याप्तौ । ५८८ पिवि ५८९ मिवि ५९० णिवि सेचने ॥ सेवन इत्येके ॥ ५९१ हिवि ५९२ दिवि ५९३ धिवि ५९४ जिवि प्रीणनार्थाः । ५९५ रिवि ५९६ रवि ५९७ धवि गत्यर्थाः । ५९८ कृवि हिंसाकरणयोश्च । ५९९ मव बन्धने । ६०० अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु ॥ **मव्यादय उदात्ता उदात्तेतः परस्मैभाषाः । जिस्त्वनुदात्तः** ॥ ६०१ धावु गतिशुद्ध्योः ॥ **उदात्तः स्वरितेदुभयतोभाषः** ॥ ६०२ धुक्ष ६०३ धिक्ष संदीपक्लेशनजीवनेषु । ६०४ वृक्ष वरणे । ६०५ शिक्ष विद्योपादाने । ६०६ भिक्ष भिक्षायामलाभे लाभे च । ६०७ क्लेश अव्यक्तायां वाचि ॥ बाधने इति दुर्गः । ६०८ दक्ष वृद्धौ शीघ्रार्थे च । ६०९ दीक्ष मौण्ड्येज्योपनयननियमव्रतादेशेषु । ६१० ईक्ष दर्शने । ६११ ईष गतिहिंसादर्शनेषु । ६१२ भाष व्यक्तायां वाचि । ६१३ वर्ष स्नेहने । ६१४ गेषृ अन्विच्छायाम् ॥ ग्लेषृ इत्येके ॥ ६१५ पेषृ प्रयत्ने । ६१६ जेषृ ६१७ णेषृ ६१८ एषृ ६१९ प्रेषृ गतौ ६२० रेषृ ६२१ हेषृ ६२२ ह्रेषृ अव्यक्ते शब्दे । ६२३ कासृ शब्दकुत्सायाम् । ६२४ भासृ दीप्तौ । ६२५ णासृ ६२६ रासृ शब्दे । ६२७ णस कौटिल्ये । ६२८ भ्यस भये । ६२९ आङः शसि इच्छायाम् । ६३० ग्रसु ६३१ ग्लसु अदने । ६३२ ईह चेष्टायाम् । ६३३ वहि ६३४ महि वृद्धौ । ६३५ अहि गतौ । ६३६ गर्ह ६३७ गल्ह कुत्सायाम् । ६३८ बर्ह ६३९ बल्ह प्राधान्ये । ६४० वर्ह ६४१ वल्ह परिभाषणहिंसाच्छादनेषु । ६४२ प्लिह गतौ । ६४३ वेहृ ६४४ जेहृ ६४५ बाहृ प्रयत्ने जेहृ गतावपि ॥ ३४६ द्राहृ निद्राक्षये ॥ निक्षेपे इत्येके ॥ ६४७ काशृ दीप्तौ । ६४८ ऊह वितर्के । ६४९ गाहू विलोडने । ६५० गृहू ग्रहणे । ६५१ ग्लह च । ६५२ घुषि कान्तिकरणे ॥ घष इति केचित् ॥ **धुक्षादय उदात्ता अनुदात्तेत आत्मनेभाषाः** ॥ ६५३ घुषिर् अविशब्दने । ६५४ अक्षू व्याप्तौ । ६५५ तक्षू ६५६ त्वक्षू तनूकरणे । ६५७ उक्ष सेचने । ६५८ रक्ष पालने । ६५९ णिक्ष चुम्बने । ६६० तृक्ष ६६१ स्तृक्ष ६६२ णक्ष गतौ । ६६३ वक्ष रोषे ॥ संघाते इत्येके ॥ ६६४ मृक्ष संघाते ॥ म्रक्ष इत्येके ॥ ६६५ तक्ष त्वचने । ६६६ सूर्क्ष आदरे । ६६७ काक्षि ६६८ वाक्षि ६६९ माक्षि काङ्क्षायाम् । ६७० द्राक्षि ६७१ ध्राक्षि ६७२ ध्वाक्षि घोरवासिते च । ६७३ चूष पाने । ६७४ तूष तुष्टौ । ६७५ पूष वृद्धौ । ६७६ मूष स्तेये । ६७७ लूष ६७८ रूष भूषायाम् । ६७९ शूष प्रसवे । ६८० यूष हिंसायाम् । ६८१ जूष च । ६८२ भूष अलंकारे । ६८३ ऊष रुजायाम् । ६८४ ईष उञ्छे । ६८५ कष ६८६ खष ६८७ शिष ६८८ जष ६८९ झष ६९० शष ६९१ वष ६९२ मष ६९३ रुष ६९४ रिष हिंसार्थाः । ६९५ भष भर्त्सने । ६९६ उष दाहे । ६९७

जिषु ६९८ विषु ६९९ मिषु सेचने । ७०० पुष पुष्टौ । ७०१ श्रिषु ७०२ श्लिषु ७०३ प्रुषु ७०४ प्लुषु दाहे । ७०५ पृषु ७०६ वृषु ७०७ मृषु सेचने ॥ मृषु सहने च ॥ इतरौ हिंसासंक्लेशनयोश्च ॥ ७०८ घृषु संघर्षे । ७०९ हृषु अलीके । ७१० तुस ७११ ह्रस ७१२ ह्लस ७१३ रस शब्दे । ७१४ लस श्लेषणक्रीडनयोः । ७१५ घस्लृ अदने । ७१६ जर्ज ७१७ चर्च ७१८ झर्झ परिभाषणहिंसातर्जनेषु । ७१९ पिसृ ७२० पेसृ गतौ । ७२१ हसे हसने । ७२२ णिश समाधौ । ७२३ मिश ७२४ मश शब्दे रोषकृते च ७२५ शव गतौ । ७२६ शश प्लुतगतौ । ७२७ शसु हिंसायाम् । ७२८ शंसु स्तुतौ ॥ दुर्गतावित्येके ॥ ७२९ चह परिकल्कने । ७३० मह पूजायाम् । ७३१ रह त्यागे । ७३२ रहि गतौ । ७३३ दृह ७३४ दृहि ७३५ बृह ७३६ बृहि वृद्धौ ॥ बृहि शब्दे च । बृहिर् इत्येके ॥ ७३७ तुहिर् ७३८ दुहिर् ७३९ उहिर् अर्दने । ७४० अर्ह पूजायाम् ॥ **घुषिरादय उदात्ता उदात्तेतः परस्मैभाषाः । घसिस्त्वनुदात्तः** ॥ ७४१ द्युत दीप्तौ । ७४२ श्विता वर्णे । ७४३ ञिमिदा स्नेहने । ७४४ ञिष्विदा स्नेहनमोचनयोः ॥ मोहनयोरित्येके । ञिक्ष्विदा चेत्येके ॥ ७४५ रुच दीप्तावभिप्रीतौ च । ७४६ घुट परिवर्तने । ७४७ रुट ७४८ लुट ७४९ लुठ प्रतिघाते । ७५० शुभ दीप्तौ । ७५१ क्षुभ संचलने । ७५२ णभ ७५३ तुभ हिंसायाम् ॥ आद्योऽभावेऽपि ॥ ७५४ स्रंसु ७५५ ध्वंसु ७५६ भ्रंसु अवस्रंसने ॥ ध्वंसु गतौ च । शुभ इत्यपि केचित् ॥ ७५७ स्रम्भु विश्वासे । ७५८ वृतु वर्तने । ७५९ वृधु वृद्धौ । ७६० शृधु शब्दकुत्सायाम् । ७६१ स्यन्दू प्रस्रवणे । ७६२ कृपू सामर्थ्ये ॥ **द्युतादय उदात्ता अनुदात्तेत आत्मनेभाषाः । वृत्** ॥ ७६४ घट चेष्टायाम् । ७६४ व्यथ भयसंचलनयोः । ७६५ प्रथ प्रख्याने । ७६६ प्रस विस्तारे । ७६७ म्रद मर्दने । ७६८ स्खद स्खदने । ७६९ क्षजि गतिदानयोः । ७७० दक्ष गतिहिंसनयोः । ७७१ क्रप कृपायां गतौ च । ७७२ कदि ७७३ क्रदि ७७४ क्लदि वैक्लव्ये । वैकल्ये इत्येके । त्रयोऽप्यनिदित इति नन्दी । इदित इति स्वामी । कदिक्रदी इदितौ । क्रद क्लदाविति चानिदितौ इति मैत्रेयः ॥ ७७५ ञित्वरा संभ्रमे ॥ **घटादयः षितः उदात्ता अनुदात्तेत आत्मनेभाषाः** ॥ ७७६ ज्वर रोगे । ७७७ गड सेचने । ७७८ हेड वेष्टने । ७७९ वट ७८० भट परिभाषणे । ७८१ णट नृतौ ॥ गतावित्यन्ये ॥ ७८२ ष्टक प्रतिघाते । ७८३ चक तृप्तौ । ७८४ कखे हसने । ७८५ रगे शङ्कायाम् । ७८६ लगे सङ्गे । ७८७ ह्रगे ७८८ ह्लगे ७८९ षगे ७९० ष्टगे संवरणे । ७९१ कगे नोच्यते । ७९२ अक ७९३ अग कुटिलायां गतौ । ७९४ कण ७९५ रण गतौ ७९६ चण ७९७ शण ७९८ श्रण दाने च ॥ शण गतावित्यन्ये ॥ ७९९ श्रथ ८०० श्लथ ८०१ क्नथ ८०२ क्लथ हिंसार्थाः । ८०३ चन च । ८०४ वनु च नोच्यते । ८०५ ज्वल दीप्तौ । ८०६ ह्वल ८०७ ह्मल चलने । ८०७ स्मृ आध्याने । ८०८ दॄ भये । ८०९ नॄ नये । ८१० श्रा पाके । मारणतोषणनिशामनेषु ८११ ज्ञा । कम्पने ८१२ चलिः । ८१३ छदिर् ऊर्जने । जिह्वोन्मथने । ८१४ लडिः । ८१५ मदी हर्षग्लेपनयोः । ८१६ ध्वन शब्दे । दलि–वलि–स्खलि–रणि–ध्वनि–त्रपि–क्षपयश्चेति भोजः । ८१७ स्वन अवतंसने ॥ **घटादयो मितः** ॥ जनी–जॄष्–क्नसु–रञ्जो–ऽमन्ताश्च । ज्वल–ह्वल–ह्मल–नमामनुपसर्गाद्वा । ग्ला–स्ना–वनु–वमां–च । न–कमि–अमि–चमाम् । ८१८ शमो दर्शने । ८१९ यमोऽपरिवेषणे । ८२० स्खदिर् अवपरिभ्यां च ८२१ । फण गतौ ॥ **घटादयः फणान्ता मितः** ॥ **वृत्** । **ज्वरादय उदात्ता उदात्तेतः परस्मैभाषाः** । ८२२ राजृ दीप्तौ ॥ **उदात्तः स्वरितेदुभयतोभाषः** ॥ ८२३ टुभ्राजृ ८२४ टुभ्राशृ ८२५ टुभ्लाशृ दीप्तौ ॥ **उदात्ता अनुदात्तेत आत्मनेभाषाः** ॥ ८२६ स्यमु ८२७ स्वन ८२८ ध्वन शब्दे । ८२९ षम ८३० ष्टम अवैकल्ये ॥ **वृत्** ॥ ८३१ ज्वल दीप्तौ । ८३२ चल कम्पने । ८३३ जल घातने । ८३४ टल ८३५ ट्वल वैक्लव्ये ८३६ स्थल स्थाने । ८३७ हल विलेखने । ८३८ णल गन्धे ॥ बंधनेइत्येके ॥ ८३९ पल गतौ । ८४० बल प्राणने धान्यावरोधने च । ८४१ पुल महत्त्वे । ८४२ कुल संस्त्याने बन्धुषु च । ८४३ शल ८४४ हुल ८४५ पत्लृ गतौ । ८४६ क्वथे निष्पाके । ८४७ पथे गतौ ८४८ मथे विलोडने । ८४९ टुवम उद्गिरणे । ८५० भ्रमु चलने । ८५१ क्षर संचलने ॥ **ज्वलादय उदात्ता उदात्तेतः परस्मैभाषाः** ॥ ८५२ षह मर्षणे ॥ **उदात्तोऽनुदात्तेदात्मनेभाषः** ॥ ८५३ रमु क्रीडायाम् ॥ **अनुदात्त उदात्तेदात्मनेभाषः** ॥ ८५४ षद्लृ विशरणगत्यवसादनेषु । ८५५ शद्लृ शातने । ८५६ क्रुश आह्वाने रोदने च । **षदादयस्त्रयोऽनुदात्ता उदात्तेतः परस्मैभाषाः** ॥ ८५७ कुच संपर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु । ८५८ बुध अवगमने । ८५९ रुह बीजजन्मनि प्रादुर्भावे च । ८६० कस गतौ ॥ **वृत्** । **कुचादय उदात्ता उदात्तेतः परस्मैभाषाः । रुहिस्त्वनुदात्तः** ॥ ८६१ हिक्क अव्यक्ते शब्दे । ८६२ अञ्चु गतौ याचने च ॥ अचु इत्येके । अचि इत्यपरे ॥ ८६३ टुयाचृ याच्ञायाम् । ८६४ रेटृ परिभाषणे । ८६५ चते ८६६ चदे याचने । ८६७ प्रोथृ पर्याप्तौ । ८६८ मिदृ ८६९ मेदृ मेधाहिंसनयोः । थान्ताविमाविति स्वामी । धान्ताविति न्यासः ॥ ८७० मेधृ संगमे च । ८७१ णिदृ ८७२ णेदृ कुत्सासंनिकर्षयोः । ८७३ शृधु ८७४ मृधु उन्दने । ८७५ बुधिर् बोधने ८७६ उबुन्दिर् निशामने । ८७७ वेणृ गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु ॥ नान्तोऽप्ययम् ॥ ८७८ खनु अवदारणे । ८७९ चीवृ आदानसंवरणयोः । ८८० चायृ पूजानिशामनयोः । ८८१ व्यय गतौ । ८८२ दाशृ दाने । ८८३ भेषृ भये ॥ गतावित्येके ॥ ८८४ भ्रेषृ ८८५ भ्लेषृ गतौ । ८८६ अस गतिदीप्त्यादानेषु ॥ अष इत्येके ॥ ८८७ स्पश बाधनस्पर्शनयोः । ८८८ लष कान्तौ ।

८८९ चष भक्षणे । ८९० छष हिंसायाम् । ८९१ झष आदानसंवरणयोः । ८९२ भ्रक्ष ८९३ भ्लक्ष अदने । ८९४ दासृ दाने । ८९५ माहृ माने । ८९६ गुहू संवरणे ॥ **हिक्कादय उदात्ताः स्वरितेत उभयतोभाषाः** ॥ ८९७ श्रिञ् सेवायाम् ॥ **उदात्त उभयतोभाषः** ॥ ८९८ भृञ् भरणे । ८९९ हृञ् हरणे । ९०० धृञ् धारणे । ९०१ णीञ् प्रापणे ॥ **भृञादयश्चत्वारोऽनुदात्ता उभयतोभाषाः** ॥ ९०२ धेट् पाने । ९०३ ग्लै ९०४ म्लै हर्षक्षये । ९०५ धै न्यक्करणे । ९०६ द्रै स्वप्ने । ९०७ ध्रै तृप्तौ । ९०८ ध्यै चिन्तायाम् । ९०९ रै शब्दे । ९१० स्त्यै ९११ ष्ट्यै शब्दसंघातयोः । ९१२ खै खदने । ९१३ क्षै ९१४ जै ९१५ षै क्षये । ९१६ कै ९१७ गै शब्दे । ९१८ शै ९१९ श्रै पाके । ९२० पै ९२१ ओवै शोषणे । ९२२ ष्टै वेष्टने ९२३ ष्णै वेष्टने ॥ शोभायां चेत्येके ॥ ९२४ दैप् शोधने । ९२५ पा पाने । ९२६ घ्रा गन्धोपादाने । ९२७ ध्मा शब्दाग्निसंयोगयोः । ९२८ ष्ठा गतिनिवृत्तौ । ९२९ म्ना अभ्यासे । ९३० दाण् दाने । ९३१ ह्वृ कौटिल्ये । ९३२ स्वृ शब्दोपतापयोः । ९३३ स्मृ चिन्तायाम् । ९३४ ह्वृ संवरणे । ९३५ सृ गतौ । ९३६ ऋ गतिप्रापणयोः । ९३७ गृ ९३८ घृ सेचने । ९३९ ध्वृ हूर्च्छने । ९४० स्रु गतौ । ९४१ षु प्रसवैश्वर्ययोः । ९४२ श्रु श्रवणे । ९४३ ध्रु स्थैर्ये । ९४४ दु ९४५ द्रु गतौ । ९४६ जि ९४७ ज्रि अभिभवे ॥ **घयत्यादयोऽनुदात्ताः परस्मैभाषाः** ॥ ९४८ ष्मिङ् ईषद्धसने । ९४९ गुङ् अव्यक्ते शब्दे । ९५० गाङ् गतौ । ९५१ कुङ् ९५२ घुङ् ९५३ उङ् ९५४ ङुङ् शब्दे ॥ उङ् कुङ् खुङ् गुङ् घुङ् ङुङ् इत्यन्ये ॥ ९५५ च्युङ् ९५६ ज्युङ् ९५७ प्रुङ् ९५८ प्लुङ् गतौ । क्रुङ् इत्येके ॥ ९५९ रुङ् गतिरेषणयोः । ९६० धृङ् अवध्वंसने । ९६१ मेङ् प्रणिदाने । ९६२ देङ् रक्षणे । ९६३ श्यैङ् गतौ । ९६४ प्यैङ् वृद्धौ । ९६५ त्रैङ् पालने ॥ **ष्मिङादयोऽनुदात्ता आत्मनेभाषाः** ॥ ९६६ पूङ् पवने । ९६७ मूङ् बन्धने । ९६८ डीङ् विहायसा गतौ ॥ **पूङादयस्त्रय उदात्ता आत्मनेभाषाः** ॥ ९६९ तॄ प्लवनतरणयोः ॥ **उदात्तः परस्मैभाषः** ॥ ९७० गुप गोपने । ९७१ तिज निशाने । ९७२ मान पूजायाम् । ९७३ बध बन्धने ॥ **गुपादयश्चत्वार उदात्ता अनुदात्तेत आत्मनेभाषाः** ॥ ९७४ रभ राभस्ये । ९७५ डुलभष् प्राप्तौ । ९७६ ष्वञ्ज परिष्वङ्गे । ९७७ हद पुरीषोत्सर्गे ॥ **रभादयश्चत्वार उदात्ता अनुदात्तेत आत्मनेभाषाः** ॥ ९७८ ञिष्विदा अव्यक्ते शब्दे ॥ **उदात्त उदात्तेत् परस्मैभाषः** ॥ ९७९ स्कन्दिर् गतिशोषणयोः । ९८० यभ मैथुने । ९८१ णम प्रह्वत्वे शब्दे च । ९८२ गम्लृ ९८३ सृप्लृ गतौ । ९८४ यम उपरमे । ९८५ तप संतापे । ९८६ त्यज हानौ । ९८७ षञ्ज सङ्गे । ९८८ दृशिर् प्रेक्षणे । ९८९ दंश दशने । ९९० कृष विलेखने । ९९१ दह भस्मीकरणे । ९९२ मिह सेचने ॥ **स्कन्दादयोऽनुदात्ता उदात्तेतः परस्मैभाषाः** ॥ ९९३ कित निवासे च ॥ **उदात्तेत् परस्मैभाषः** ॥ ९९४ दान खण्डने । ९९५ शान तेजने ॥ **उदात्तौ स्वरितेतावुभयतोभाषौ** ॥ ९९६ डुपचष् पाके । ९९७ षच समवाये । ९९८ भज सेवायाम् । ९९९ रञ्ज रागे १००० शप आक्रोशे । १००१ ॥ त्विष दीप्तौ । १००२ यज देवपूजासंगतिकरणदानेषु । १००३ डुवप् बीजसंताने । छेदनेऽपि । १००४ वह प्रापणे ॥ **पचादयोऽनुदात्ताः स्वरितेत उभयतोभाषाः । षचिस्तूदात्तः** ॥ १००५ वस निवासे ॥ **अनुदात्त उदात्तेत् परस्मैभाषः** ॥ १००६ वेञ् तन्तुसन्ताने । १००७ व्येञ् संवरणे । १००८ ह्वेञ् स्पर्धायां शब्दे च ॥ **वेञादयस्त्रयोऽनुदात्ता उभयतोभाषाः** ॥ १००९ वद व्यक्तायां वाचि । १०१० टुओश्वि गतिवृद्ध्योः ॥ **वृत् । अयं वदतिश्वोदात्तौ परस्मैभाषौ** ॥

**इति शब्विकरणा भ्वादयः ॥ १ ॥**

---

१०११ अद भक्षणे । १०१२ हन हिंसागत्योः ॥ **अनुदात्तावुदात्तेतौ परस्मैपदिनौ** ॥ १०१३ द्विष अप्रीतौ । १०१४ दुह प्रपूरणे । १०१५ दिह उपचये । १०१६ लिह आस्वादने ॥ **द्विषादयोऽनुदात्ताः स्वरितेत उभयतोभाषाः** ॥ १०१७ चक्षिङ् व्यक्तायां वाचि । अयं दर्शनेऽपि ॥ **अनुदात्तोऽनुदात्तेदात्मनेपदी** ॥ १०१८ ईर गतौ कम्पने च । १०१९ ईड स्तुतौ । १०२० ईश ऐश्वर्ये । १०२१ आस उपवेशने । १०२२ आङःशासु इच्छायाम् । १०२३ वस आच्छादने । १०२४ कसि गतिशासनयोः । कस इत्येके ॥ कश इत्यपि ॥ १०२५ णिसि चुम्बने । १०२६ णिजि शुद्धौ । १०२७ शिजि अव्यक्ते शब्दे । १०२८ पिजि वर्णे संपर्चने इत्येके । उभयत्रेत्यन्ये । अवयवे इत्यपरे । अव्यक्ते शब्दे इतीतरे । पृजि इत्येके ॥ १०२९ वृजी वर्जने ॥ वृजि इत्यन्ये ॥ १०३० पृच संपर्चने ॥ **ईरादय उदात्त अनुदात्तेत आत्मनेभाषाः** ॥ १०३१ षूङ् प्राणिगर्भविमोचने । १०३२ शीङ् स्वप्ने ॥ **उदात्तावात्मनेभाषौ** ॥ १०३३ यु मिश्रणेऽमिश्रणे च । १०३४ रु शब्दे । १०३५ णु स्तुतौ । १०३६ टुक्षु शब्दे । १०३७ क्ष्णु तेजने । १०३८ ष्णु प्रस्रवणे ॥ **युप्रभृतय उदात्ता उदात्तेतः परस्मैभाषाः** ॥ १०३९ ऊर्णुञ् आच्छादने ॥ **उदात्त उभयतोभाषः** ॥ १०४० द्यु अभिगमने । १०४१ षु प्रसवैश्वर्ययोः । १०४२ कु शब्दे । १०४३ ष्टुञ् स्तुतौ ॥ **द्युप्रभृतयोऽनुदात्ताः परस्मैभाषाः । स्तौतिस्तूभयतोभाषः** ॥ १०४४ ब्रूञ् व्यक्तायां वाचि ॥ **उदात्त उभयतोभाषः** ॥

१०४५ इण् गतौ । १०४६ इङ् अध्ययने । १०४७ इक् स्मरणे । १०४८ वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु । १०४९ या प्रापणे १०५० वा गतिगन्धनयोः । १०५१ भा दीप्तौ । १०५२ ष्णा शौचे । १०५३ श्रा पाके । १०५४ द्रा कुत्सायां गतौ । १०५५ प्सा भक्षणे । १०५६ पा रक्षणे । १०५७ रा दाने । १०५८ ला आदाने ॥ द्वावपि दाने इति चन्द्रः ॥ १०५९ दाप् लवने । १०६० ख्या प्रकथने । १०६१ प्रा पूरणे । १०६२ मा माने । १०६३ वच परिभाषणे ॥ **इण् प्रभृतयोऽनुदात्ताः परस्मैभाषाः । इङ् त्वात्मनेपदी** ॥ १०६४ विद ज्ञाने । १०६५ अस् भुवि । १०६६ मृजू शुद्धौ । १०६७ रुदिर् अश्रुविमोचने ॥ **विदादय उदात्ता उदात्तेतः परस्मैभाषाः** ॥ १०६८ ञिष्वप् शये ॥ **उदात्तः परस्मैभाषः** ॥ १०६९ श्वस प्राणने । १०७० अन च । १०७१ जक्ष भक्षहसनयोः । **वृत्** ॥ १०७२ जागृ निद्राक्षये । १०७३ दरिद्रा दुर्गतौ । १०७४ चकासृ दीप्तौ । १०७५ शासु अनुशिष्टौ ॥ **श्वसादय उदात्ता उदात्तेतः परस्मैभाषाः** ॥ १०७६ दीधीङ् दीप्तिदेवनयोः । १०७७ वेवीङ् वेतिना तुल्ये ॥ **उदात्तावात्मनेभाषौ** ॥ १०७८ षस १०७९ सस्ति स्वप्ने । १०८० वश कान्तौ ॥ **षसादय उदात्ता उदात्तेतः परस्मैभाषाः** ॥ १०८१ चर्करीतं च । १०८२ ह्नुङ् अपनयने । **अनुदात्ता आत्मनेभाषौः** ॥

**इति लुग्विकरणा अदादयः ॥ २ ॥**

---

१०८३ हु दानादनयोः ॥ आदाने चेत्येके । १०८४ ञिभी भये । १०८५ ह्री लज्जायाम् ॥ **जुहोत्यादयोऽनुदात्ताः परस्मैभाषाः** ॥ १०८६ पॄ पालनपूरणयोः । पृ इत्येके ॥ **उदात्तः परस्मैभाषः** ॥ १०८७ डुभृञ् धारणपोषणयोः **अनुदात्त उभयतोभाषः** ॥ १०८८ माङ् माने शब्दे च । १०८९ ओहाङ् गतौ ॥ **अनुदात्तावात्मनेपदिनौ** ॥ १०९० ओहाक् त्यागे ॥ **अनुदात्तः परस्मैपदी** ॥ १०९१ डुदाञ् दाने । १०९२ डुधाञ् धारणपोषणयोः । दाने इत्यप्येके ॥ **अनुदात्तावुभयतोभाषौ** ॥ १०९३ णिजिर् शौचपोषणयोः । १०९४ विजिर् पृथग्भावे । १०९५ विष्लृ व्याप्तौ ॥ **णिजिरादयोऽनुदात्ताः स्वरितेत उभयतोभाषाः** ॥ १०९६ घृ क्षरणदीप्त्योः । १०९७ हृ प्रसह्यकरणे । १०९८ ऋ १०९९ सृ गतौ ॥ **घृप्रभृतयोऽनुदात्ताः स्वरितेत परस्मैभाषाः** ॥ ११०० भस भर्त्सनदीप्त्योः ॥ **उदात्त उदात्तेत् परस्मैपदी** ॥ ११०१ कि ज्ञाने ॥ **अनुदात्तः परस्मैपदी** ॥ ११०२ तुर त्वरणे । ११०३ धिष शब्दे । ११०४ धन धान्ये । ११०५ जन जनने ॥ **तुरादय उदात्ता उदात्तेतः परस्मैभाषाः** ॥ ११०६ गा स्तुतौ **अनुदात्तः परस्मैभाषः । घृप्रभृतय एकादश छन्दसि । इयर्तिः भाषायामपि** ॥

**इति श्लुविकरणा जुहोत्यादयः ॥ ३ ॥**

---

११०७ दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु । ११०८ षिवु तन्तुसन्ताने । ११०९ स्रिवु गतिशोषणयोः । १११० ष्ठिवु निरसने । ११११ ष्णुसु अदने ॥ आदाने इत्येके । अदर्शने इत्यपरे ॥ १११२ ष्णसु निरसने । १११३ क्नसु ह्वरणदीप्त्योः । १११४ व्युष दाहे । १११५ प्लुष च । १११६ नृती गात्रविक्षेपे । १११७ त्रसी उद्वेगे । १११८ कुथ पूतीभावे । १११९ पुथ हिंसायाम् । ११२० गुध परिवेष्टने । ११२१ क्षिप प्रेरणे । ११२२ पुष्प विकसने । ११२३ तिम ११२४ ष्टिम ११२५ ष्टीम आर्द्रीभावे । ११२६ व्रीड चोदने लज्जायां च । ११२७ इष गतौ । ११२८ षह ११२९ षुह चक्यर्थे । ११३० जॄष् ११३१ झॄष् वयोहानौ ॥ **दिवादय उदात्ता उदात्तेतः परस्मैभाषाः । क्षिपिस्त्वनुदात्तः** ॥ ११३२ षूङ् प्राणिप्रसवे । ११३३ दूङ् परितापे ॥ **उदात्तावात्मनेभाषौ** ॥ ११३४ दीङ् क्षये । ११३५ डीङ् विहायसा गतौ ॥ ११३६ धीङ् आधारे । ११३७ मीङ् हिंसायाम् । ११३८ रीङ् श्रवणे । ११३९ लीङ् श्लेषणे । ११४० व्रीङ् वृणोत्यर्थे ॥ **वृत् । स्वादय ओदितः** ॥ ११४१ पीङ् पाने । ११४२ माङ् माने । ११४३ ईङ् गतौ । ११४४ प्रीङ् प्रीतौ ॥ **दीङादय आत्मनेपदिनोऽनुदात्ताः डीङ् तूदात्तः** ॥ ११४५ शो तनूकरणे । ११४६ छो छेदने । ११४७ षो अन्तकर्मणि । ११४८ दो अवखण्डने ॥ **श्यतिप्रभृतयोऽनुदात्ताः परस्मैभाषाः** ॥ ११४९ जनी प्रादुर्भावे । ११५० दीपी दीप्तौ । ११५१ पूरी आप्यायने । ११५२ तूरी गतित्वरणहिंसनयोः । ११५३ धूरी ११५४ गूरी हिंसागत्योः । ११५५ घूरी ११५६ जूरी हिंसावयोहान्योः । ११५७ शूरी हिंसास्तम्भनयोः । ११५८ चूरी दाहे । ११५९ तप ऐश्वर्ये वा । ११६० वृतु वरणे । ११६१ क्लिश उपतापे । ११६२ काशृ दीप्तौ । ११६३ वाशृ शब्दे ॥ **जन्यादय उदात्ता अनुदात्तेत आत्मनेभाषाः । तपिस्त्वनुदात्तः** ॥ ११६४ मृष तितिक्षायाम् । ११६५ शुचिर् पूतीभावे ॥ **उदात्तौ स्वरितेतावुभयतोभाषौ** ॥ ११६६ णह बन्धने । ११६७ रञ्ज रागे । ११६८ शप आक्रोशे ॥ **णहादयस्त्रयोऽनुदात्ताः स्वरितेत उभयतोभाषाः** ॥ ११६९ पद गतौ । ११७० खिद दैन्ये । ११७१ विद

सत्तायाम् । ११७२ बुध अवगमने । ११७३ युध संप्रहारे । ११७४ अनो रुध कामे । ११७५ अण प्राणने ॥ अन इत्येके ॥ ११७६ मन ज्ञाने । ११७७ युज समाधौ । ११७८ सृज विसर्गे । ११७९ लिश अल्पीभावे ॥ **पदादयोऽनुदात्ता अनुदात्तेत आत्मनेभाषाः** ॥ ११८० राधोऽकर्मकाद्वृद्धावेव । ११८१ व्यध ताडने । ११८२ पुष पुष्टौ । ११८३ शुष शोषणे । ११८४ तुष प्रीतौ । ११८५ दुष वैकृत्ये । ११८६ श्लिष आलिङ्गने । ११८७ शक विभाषितो मर्षणे । ११८८ ञिष्विदा गात्रप्रक्षरणे । ११८९ क्रुध क्रोधे । ११९० क्षुध बुभुक्षायाम् । ११९१ शुध शौचे । ११९२ षिधु संराद्धौ ॥ **राधादयोऽनुदात्ता उदात्तेतः परस्मैभाषाः** ॥ ११९३ रध हिंसासंराध्योः । ११९४ णश अदर्शने । ११९५ तृप प्रीणने । ११९६ दृप हर्षमोहनयोः । ११९७ द्रुह जिघांसायाम् । ११९८ मुह वैचित्ये । ११९९ ष्णुह उद्गिरणे । १२०० ष्णिह प्रीतौ ॥ **वृत् । रधादय उदात्तेतः परस्मैभाषाः** ॥ १२०१ शमु उपशमे । १२०२ तमु काङ्क्षायाम् १२०३ दमु उपशमे । १२०४ श्रमु तपसि खेदे च । १२०५ भ्रमु अनवस्थाने । १२०६ क्षमू सहने । १२०७ क्लमु ग्लानौ । १२०८ मदी हर्षे ॥ **वृत्** ॥ १२१० असु क्षेपणे । १२११ यसु प्रयत्ने । १२१२ जसु मोक्षणे । १२१३ तसु उपक्षये । १२१४ दसु च । १२१५ वसु स्तम्भे । १२१६ व्युष विभागे ॥ व्युस इत्यन्ये युस इत्यपरे ॥ १२१७ प्लुष दाहे । १२१८ विस प्रेरणे । १२१९ कुस संश्लेषणे । १२२० बुस उत्सर्गे । १२२१ मुस खण्डने । १२२२ मसी परिणामे ॥ समी इत्येके ॥ १२२३ लुठ विलोडने । १२२४ उच समवाये । १२२५ भृशु १२२६ भ्रंशु अधःपतने । १२२७ वृश वरणे । १२२८ कृश तनूकरणे । १२२९ ञितृषा पिपासायाम् । १२३० हृष तुष्टौ । १२३१ रुष १२३२ रिष हिंसायाम् । १२३३ डिप क्षेपे । १२३४ कुप क्रोधे । १२३५ गुप व्याकुलत्वे । १२३६ युपु १२३७ रुपु १२३८ लुपु विमोहने । १२३९ लुभ गार्ध्ये । १२४० क्षुभ संचलने । १२४१ णभ १२४२ तुभ हिंसायाम् ॥ क्षुभिनभितुभयो द्युतादौ क्र्यादौ च पठ्यन्ते ॥ १२४३ क्लिदू आर्द्रीभावे १२४४ ञिमिदा स्नेहने । १२४५ ञिक्ष्विदा स्नेहनमोचनयोः । १२४६ ऋधु वृद्धौ । १२४७ गृधु अभिकाङ्क्षायाम् ॥ **वृत् । असुप्रभृतय उदात्तेतः परस्मैभाषाः** ॥

**इति श्यन्विकरणा दिवादयः ॥ ४ ॥**

---

१२४८ षूञ् अभिषवे । १२४९ षिञ् बन्धने । १२५० शिञ् निशाने । १२५१ डुमिञ् प्रक्षेपणे । १२५२ चिञ् चयने । १२५३ स्तृञ् आच्छादने । १२५४ कृञ् हिंसायाम् । १२५५ वृञ् वरणे । १२५६ धूञ् कम्पने । धुञ् इत्येके ॥ **स्वादयोऽनुदात्ता उभयतोभाषाः । वृञ् उदात्तः** ॥ १२५७ टुदु उपतापे । १२५८ हि गतौ वृद्धौ च । १२५९ पृ प्रीतौ । १२६० स्पृ प्रीतिपालनयोः ॥ प्रीतिचलनयोरित्यन्ये ॥ स्मृ इत्येके ॥ १२६१ आप्लृ व्याप्तौ । १२६२ शक्लृ शक्तौ ॥ १२६३ राध १२६४ साध संसिद्धौ ॥ **दुनोतिप्रभृतयोऽनुदात्ताः परस्मैभाषाः** ॥ १२६५ अशू व्याप्तौ संघाते च । १२६६ ष्टिघ आस्कन्दने ॥ **अशिस्तिघी उदात्तावनुदात्तेतावात्मनेभाषौ** ॥ १२६७ तिक १२६८ तिग गतौ च । १२६९ षघ हिंसायाम् । १२७० ञिधृषा प्रागल्भ्ये । १२७१ दम्भु दम्भने । १२७२ ऋधु वृद्धौ । तृप प्रीणने इत्येके ॥ छन्दसि ॥ १२७३ अह व्याप्तौ । १२७४ दघ घातने पालने च । १२७५ चमु भक्षणे । १२७६ रि १२७७ क्षि १२७८ चिरि १२७९ जिरि १२८० दाश १२८१ दृ हिंसायाम् ॥ क्षिर् भाषायाम् इत्येके । ऋक्षीत्यजादिरित्येके । रेफवानित्यन्ये ॥ **वृत् । तिकादय उदात्ता उदात्तेतः परस्मैभाषाः** ॥

**इति श्नुविकरणाः स्वादयः ॥ ५ ॥**

---

१२८२ तुद व्यथने । १२८३ णुद प्रेरणे । १२८४ दिश अतिसर्जने । १२८५ भ्रस्ज पाके । १२८६ क्षिप प्रेरणे । १२८७ कृष विलेखने ॥ **तुदादयोऽनुदात्ताः स्वरितेत उभयतोभाषाः** ॥ १२८८ ऋषी गतौ ॥ **उदात्त उदात्तेत्परस्मैपदी** ॥ १२८९ जुषी प्रीतिसेवनयोः । १२९० ओविजी भयचलनयोः । १२९१ ओलजी १२९२ ओलस्जी व्रीडने ॥ **जुषादय उदात्ता अनुदात्तेत आत्मनेभाषाः** ॥ १२९३ ओव्रश्चू छेदने । १२९४ व्यच व्याजीकरणे । १२९५ उछि उञ्छे । १२९६ उछी विवासे । १२९७ ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु । १२९८ मिच्छ उत्क्लेशे । १२९९ जर्ज १३०० चर्च १३०१ झर्झ परिभाषणभर्त्सनयोः । १३०२ त्वच संवरणे । १३०३ ऋच स्तुतौ । १३०४ उब्ज आर्जवे । १३०५ उज्झ उत्सर्गे । १३०६ लुभ विमोहने । १३०७ रिफ कत्थनयुद्धनिन्दाहिंसादानेषु ॥ रिह इत्येके । १३०८ तृप १३०९ तृम्फ तृप्तौ । द्वावपि फान्तावित्येके । १३१० तुप १३११ तुम्प १३१२ तुफ १३१३ तुम्फ हिंसायाम् । १३१४ दृप १३१५ दृम्फ उत्क्लेशे ॥ प्रथमोऽपि द्वितीयान्त इत्येके ॥ १३१६ ऋफ १३१७ ऋम्फ हिंसायाम् । १३१८ गुफ १३१९ गुम्फ ग्रन्थे । १३२० उभ १३२१ उम्भ पूरणे । १३२२ शुभ १३२३ शुम्भ शोभार्थे । १३२४ दृभी ग्रन्थे । १३२५ चृती हिंसाग्रन्थनयोः । १३२६ विध विधाने । १३२७ जुड गतौ ॥ जुन इत्येके । १३२८ मृड सुखने । १३२९ पृड च । १३३० पृण प्रीणने १३३१

वृण च । १३३२ मृण हिंसायाम् । १३३३ तुण कौटिल्ये । १३३४ पुण कर्मणि शुभे । १३३५ मुण प्रतिज्ञाने । १३३६ कुण शब्दोपकरणयोः । १३३७ शुन गतौ । १३३८ द्रुण हिंसागतिकौटिल्येषु । १३३९ घुण १३४० घूर्ण भ्रमणे । १३४१ षुर ऐश्वर्यदीप्त्योः । १३४२ कुर शब्दे । १३४३ खुर छेदने । १३४४ मुर संवेष्टने । १३४५ क्षुर विलेखने । १३४६ घुर भीमार्थशब्दयोः । १३४७ पुर अग्रगमने । १३४८ वृहू उद्यमने । वृहू इत्यन्ये ॥ १३४९ तृहू १३५० स्तृहू १३५१ तृन्हू हिंसार्थाः । १३५२ इष इच्छायाम् । १३५३ मिष स्पर्धायाम् । १३५४ किल श्वैत्यक्रीडनयोः । १३५५ तिल स्नेहे । १३५६ चिल वसने । १३५७ चल विलसने । १३५८ इल स्वप्नक्षेपणयोः १३५९ पिल संवरणे १३६० विल भेदने । १३६१ णिल गहने । १३६२ हिल भावकरणे । १३६३ शिल १३६४ षिल उञ्छे । १३६५ मिल श्लेषणे । १३६६ लिख अक्षरविन्यासे । १३६७ कुट कौटिल्ये । १३६८ पुट संश्लेषणे । १३६९ कुच संकोचने । १३७० गुज शब्दे । १३७१ गुड रक्षायाम् । १३७२ डिप क्षेपे । १३७३ छुर छेदने । १३७४ स्फुट विकसने । १३७५ मुट आक्षेपमर्दनयोः । १३७६ त्रुट छेदने । १३७७ तुट कलहकर्मणि । १३७८ चुट १३७९ छुट छेदने । १३८० जुड बन्धने । १३८१ कड मदे । १३८२ लुट संश्लेषणे । १३८३ कृड घनत्वे । १३८४ कुड बाल्ये । १३८५ पुड उत्सर्गे । १३८६ घुट प्रतिघाते । १३८७ तुड तोडने । १३८८ थुड १३८९ स्थुड संवरणे । खुड छुड इत्येके ॥ १३९० स्फुर १३९१ स्फुल संचलने । स्फुर स्फुरणे, स्फुल संचलने इत्येके । स्फर इत्यन्ये ॥ १३९२ स्फुड १३९३ चुड १३९४ व्रुड संवरणे ॥ १३९५ क्रुड १३९६ भृड निमज्जने इत्येके ॥ **व्रश्चादय उदात्ता उदात्तेतः परस्मैभाषाः** ॥ १३९७ गुरी उद्यमने ॥ **उदात्तोऽनुदात्तेदात्मनेपदी** ॥ १३९८ णू स्तवने । १३९९ धू विधूनने ॥ **उदात्तौ परस्मैभाषौ** ॥ १४०० गु पुरीषोत्सर्गे । १४०१ ध्रु गतिस्थैर्ययोः ॥ ध्रुव इत्येके ॥ **अनुदात्तौ परस्मैपदिनौ** ॥ १४०२ कुङ् शब्दे ॥ **उदात्त आत्मनेपदी** ॥ दीर्घान्त इति कैयटादयः । ह्रस्वान्त इति न्यासः । **वृत्** ॥ १४०३ पृङ् व्यायामे । १४०४ मृङ् प्राणत्यागे ॥ **अनुदात्तावात्मनेभाषौ** ॥ १४०५ रि १४०६ पि गतौ । १४०७ धि धारणे । १४०८ क्षि निवासगत्योः ॥ **रियत्यादयोऽनुदात्ताः परस्मैभाषाः** ॥ १४०९ षू प्रेरणे । १४१० कॄ विक्षेपे । १४११ गॄ निगरणे ॥ **उदात्ताः परस्मैभाषाः** ॥ १४१२ दृङ् आदरे । १४१३ धृङ् अवस्थाने ॥ **अनुदात्तावात्मनेभाषौ** ॥ १४१४ प्रच्छ ज्ञीप्सायाम् ॥ **वृत्** ॥ १४१५ सृज विसर्गे । १४१६ टुमस्जो शुद्धौ । १४१७ रुजो भङ्गे । १४१८ भुजो कौटिल्ये । १४१९ छुप स्पर्शे । १४२० रुश १४२१ रिश हिंसायाम् । १४२२ लिश गतौ । १४२३ स्पृश संस्पर्शने । १४२४ विच्छ गतौ । १४२५ विश प्रवेशने । १४२६ मृश आमर्शने १४२७ णुद प्रेरणे । १४२८ षद्लृ विशरणगत्यवसादनेषु । १४२९ शद्लृ शातने ॥ **पृच्छादयोऽनुदात्ता उदात्तेतः परस्मैभाषाः । विच्छस्तूदात्तः** ॥ १४३० मिल संगमे ॥ **उदात्तः स्वरितेदुभयतोभाषः** ॥ १४३१ मुच्लृ मोक्षणे । १४३२ लुप्लृ छेदने । १४३३ विद्लृ लाभे । १४३४ लिप उपदेहे । १४३५ षिच क्षरणे ॥ **मुचादयोऽनुदात्ताः स्वरितेत उभयतोभाषाः । विन्दतिस्तूदात्तः** ॥ १४३६ कृती छेदने ॥ **उदात्त उदात्तेत्परस्मैपदी** ॥ १४३७ खिद परिघाते ॥ **अनुदात्त उदात्तेत्परस्मैपदी** ॥ १४३८ पिश अवयवे ॥ **उदात्त उदात्तेत्परस्मैपदी । वृत्** ॥

**इति शविकरणास्तुदादयः ॥ ६ ॥**

---

१४३९ रुधिर् आवरणे । १४४० भिदिर् विदारणे । १४४१ छिदिर् द्वैधीकरणे । १४४२ रिचिर् विरेचने । १४४३ विचिर् पृथग्भावे । १४४४ क्षुदिर् संपेषणे । १४४५ युजिर् योगे ॥ **रुधादयोऽनुदात्ताः स्वरितेत उभयतोभाषाः** ॥ १४४६ उच्छृदिर् दीप्तिदेवनयोः । १४४७ उतृदिर् हिंसानादरयोः ॥ **उदात्तौ स्वरितेतावुभयतोभाषौ** ॥ १४४८ कृती वेष्टने ॥ **उदात्त उदात्तेत्परस्मैपदी** ॥ १४४९ञिइन्धी दीप्तौ ॥ **उदात्तोऽनुदात्तेदात्मनेपदी** ॥ १४५० खिद दैन्ये । १४५१ खिद विचारणे ॥ **अनुदात्तावनुदात्तेतावात्मनेपदिनौ** ॥ १४५२ शिषॢ विशेषणे । १४५३ पिषॢ संचूर्णने । १४५४ भञ्जो आमर्दने । १४५५ भुज पालनाभ्यवहारयोः ॥ **शिषादयोऽनुदात्ता उदात्तेतः परस्मैभाषाः** ॥ १४५६ तृह । १४५७ हिंसि हिंसायाम् । १४५८ उन्दी क्लेदने १४५९ अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु । १४६० तञ्चू संकोचने । १४६१ ओविजी भयचलनयोः । १४६२ वृजी वर्जने । १४६३ पृची संपर्के ॥ **तृहादय उदात्ता उदात्तेतः परस्मैपदिनः ॥ वृत्** ॥

**इति श्नम्विकरणा रुधादयः ॥ ७ ॥**

---

१४६४ तनु विस्तारे । १४६५ षणु दाने । १४६६ क्षणु हिंसायाम् । १४६७ क्षिणु च । १४६८ ऋणु गतौ । १४६९ तृणु अदने । १४७० घृणु दीप्तौ ॥ **तनादय उदात्ताः स्वरितेत उभयतोभाषाः** ॥ १४७१ वनु याचने । १४७२ मनु अवबोधने ॥ **उदात्तावनुदात्तेतावात्मनेभाषौ** ॥ १४७३ डुकृञ् करणे ॥ **अनुदात्त उभयतोभाषः** ॥

**इति उविकरणास्तनादयः ॥ ८ ॥**

---

